तिरुमल - तिरुपति - देवस्थान - वेदान्तप्रचार ग्रन्थमाला - स. ४६ (द्वितीयावृत्तिः)

श्री

श्रीनिवासाय नमः

श्रीमदानन्दतीर्थभगवत्पादप्रणीतं

# तत्त्वसङ्ख्यानम्

श्रीमज्जयतीर्थ विरचितटीकासहितम्

श्रीमद्विजयीन्द्रतीर्थ श्रीपाद - श्रीरोङ्गी वेङ्कटभट्टोपाध्याय
श्री श्रीमुष्ण अनन्ताचार्य - रचित व्याख्यात्रयोपेतम्




श्री वेङ्कटेश्वरप्राच्यमहाकलाशालातः निवृत्तव्याकरणप्रधानाध्यापकेन

रा. राममूर्तिशर्मणा

सम्पादितम्



ये शङ्खचक्रोज्वलबाहुयुग्माः
स्वाङ्घ्रिं भजन्ते भवसिन्धुरेषः ।
कटिप्रमाणस्त्विति वेङ्कटेशः
स्फुटीकरोत्यात्मकराम्बुजाग्रैः ॥

दृष्ट्वा दिशि दिशि स्वीयान् दयया पालयन्निव ।
वर्तते विश्वनश्चक्षुः वेङ्कटे वेङ्कटेश्वरः ॥

श्रुतिशतपरिगीतः शुद्धभावैर्गृहीतः
कमलनिलयतातः कञ्जनेत्रः प्रतीतः ।
सकलजगदतीतः सर्वसम्पत्समेतः
प्रविशतु मम चेतः प्रत्यहं श्रीनिकेतः ॥

श्रीवेङ्कटलसच्छैलवासी दासीकृतामरः ।
छायया पातु मां नित्यं श्रीनिवाससुरद्रुमः ॥

समस्तसुजनाधारं दोषदूरं गुणाकरम् ।
श्रीवेङ्कटाचलावासं श्रीनिवासं भजेऽनिशम् ॥

सनीरनीरदप्रख्यं सच्चिदानन्दविग्रहम् ।
रमारमणमीशेशं विट्ठलं समुपास्महे ॥

महदिदमामोदस्थानं, यत् - प्रायः पञ्चविंशतिसंवत्सरेभ्यः पूर्वं तिरुमल - तिरुपति - देवस्थानाधिकारिभिः मुद्रापितं यत 'तत्वसङ्ख्यानम्', तदिदं पुनर्मुद्रापितमद्येति ॥

पूर्वं मुद्रापितस्य ग्रन्थस्यावलोकने बहव आसक्ताः कथञ्चित् ग्रन्थलाभाय महान्तं यत्नमास्थाय तदलाभेन, पुनर्मुद्रापणे देवस्थानाधिकारिभ्यो निवदेनीयमिति मां बहवो बहुशो बोधयामासुः ।

तथैव इदानीन्तनाधिकारिणां सकाशे न्यवेदयम्। सत्यपि कार्यान्तर भारे, एतादृशे सत्कर्मणि नितान्तमुत्साहवन्तः, उदारहृदयाः अनवरतं श्रीमन्नारायणचरणारविन्दमकरन्दास्वादनपराः अतएव श्रीश्रीनिवासमहाप्रसादासादितमहापदवीकाः **श्री पि.वि.आर्.के. प्रसादमहोदयाः** (Sri P.V.R.K. Prasad, I.A.S.) प्रार्थनां मदीयां उररीकृत्य पुनर्मुद्रापणे सामोदमङ्गीचक्रुः ॥

प्रथममुद्रापणे व्याख्याद्वयमेवासीत। इदानीं तु तृतीया व्याख्या 'तत्वदीपिकाख्या, लोकविख्यातानां श्रीमतां श्रीमुष्ण आर्याचार्याणामात्मजैः पण्डितप्रवरैः श्रीमद्भिः अनन्ताचार्यवर्यैर्विरचिता च विराजते ॥

इयमेकैव मातृका अस्मच्छ्रुगुरपादैः गुरुवर्यैः महामहोपाध्याय-श्रीमुष्ण-सेतुमाधवाचार्यैः संपादिता । यथामातृकं मुद्रापितम् । यदि दोषाः स्युः, शोधयन्तु बोधयन्तु च गुणैकपक्षपातिनो महाजनाः॥ पु. २९. स घट इत्येवोत्तरमित्यस्य - स्थाने सघटमित्येवेति पाठ्यम् ॥

व्याख्यात्रयोपेतोऽयं कोशः जिज्ञासूनां महते उपकाराय भवतीति नातिवक्तव्यमिति मन्ये ॥

135, T. Nagar,
TIRUPATI
6—6—1980

इत्थम्
विदुषामनुचरः
**रा. राममूर्तिशर्मा**

# FOREWORD

* * *

I am very glad to introduce to the public the present work of *Tattvasaṅkhyāna* by Sri Madhvāchārya which is now issued as one of the volumes in the series with the gloss of Sri Jayatīrtha and the commentaries of Sri Vijayīndratīrtha and Roṭṭi Venkatabhaṭṭa. This is the first work on Dvaita philosophy to be published in the series and the circumstances of its publication may be mentioned in brief. The S. V. Oriental College has been in existence for the last seventy years but with the starting of the S. V. Oriental Institute, it was included in the latter and placed under the supervision of the Director of the Institute. One of the objects of the arrangement was to encourage the Lecturers of the College to undertake research work following the Readers in the Institute. Some of the Pandits took up the cue and produced work reflecting credit on the authors thereof. The present work is one of the fruits, though not the first of the effort. Pandit R. Ramamurti Sarma, the Senior Vyakarana Lecturer in the College, took up a work of Dvaita Philosophy for editing. He studied Vyakarana in the College and later Dvaita Philosophy, both under his father-in-law Mahāmahōpādhyāya Sri S. Setumadhavacharya, Professor of Vyakarana and attained proficiency in the two sciences. He is therefore the proper person to edit the work both by virtue of his scholarship and of his persuasion.

In ten stanzas, the work sets forth and explains the nature of the universe so that the reader may

know the difference between himself and the Supreme Being who is the cause of the creation, existence and destruction of the universe and realise that there is no identity between the finite and the Absolute. Pluralism is thus indirectly established in this work. The present work is included in the ten Prakaranas of Sri Madhvāchārya which together present a comprehensive idea of his Philosophy.

The editor has given an account of the life and work of each of the commentators in his Sanskrit Introduction, and added notes to the work.

Grateful thanks are due to Mahāmahopādhyāya Sri S. Setumadhavacharya. Retired Vyakarana Professor of the S. V. O. College, for kindly lending the manuscripts of the works and for several valuable suggestions.

S. V. O. INSTITUTE
TIRUPATI.
24th August, 1954.

P. V. RAMANUJASWAMI,

DIRECTOR.

# भूमिका



उत्पत्तिस्थितिसंहृतिप्रणियतिज्ञानानि बन्धावृती
मोक्षश्चेति यतो भवन्ति जगतो भावास्स्वतन्त्रात्परात् ।
तं वन्दे निरवद्यसद्गुणतनुं लक्ष्मीधरालिङ्गितं
दोर्भिश्चक्रगदाम्बुजाऽभयभृतं भक्त्यैकगम्यं हरिम् ॥

शङ्कररविशशिमुख्याः किङ्करपदवीमुपाश्रिता यस्य ।
वेङ्कटगिरिनाथोऽसौ पङ्कजनयनः परात्परो जयति ॥

विदितचरमिदमखिलं समेषां विदुषां भुवनभूषणानाम्, यदस्मिन् भारते वर्षे मतानि त्रीणि चकासति — अद्वैतं, विशिष्टाद्वैतं, द्वैतमिति ।

तत्राद्ययोर्मतयोः प्रवर्तकाः श्रीशङ्कराचार्याः, श्रीरामानुजाचार्याः, उमापतेरादिशेषस्य चापरावताराः ।

श्रीमतां भाष्यकाराणां परिचयः

द्वैतस्य तु मतस्य श्रीमन्मध्वाचार्यनामानः समस्तजगतः कारणस्य श्रीहरेः सचिवस्थानीयस्य मुख्यप्राणाभिधस्य वायोरवतारस्तृतीयः । ये च श्रीमदानन्दतीर्थभगवत्पादा इत्यपरनामधेयाः श्रीमन्नारायणस्याज्ञां शिरसा वहन्त आम्नायार्थतत्वं स्वाभिमतं सज्जनानां सम्यग्बोधयितुमवतीर्य भुवनतलं, यथाऽऽचार्याभिप्रायं श्रुत्यर्थप्रकाशकान् सप्तत्रिंशतं (३७) ग्रन्थान् विनिर्माय, कलिकालकलुषितान्तरङ्गानपि तत्त्वबुभुत्सून् साधुजनान् समन्वगृह्णन् ॥ उक्तं ह्याचार्यनतिवचनेन —

“यो वै वैकुण्ठभर्तुः सकलसुरशिरश्श्रेणिसंलालिताज्ञां
भृत्वा, गत्वा च भूमिं श्रुतिनिकरपुराणादिभिर्वादिबृन्दम् ।

एत श्रीमद्भगवत्पादाः स्वकृतसूत्रभाष्यादौ तत्र तत्र निरूपितेषु प्रमेयजातेषु कतिपयान्यवश्यवेद्यानि तत्त्वानि "तत्त्वसङ्ख्याना" ख्येऽस्मिन् प्रकरणग्रन्थे शिष्यहिताय दशभिः कारिकाभिः प्रत्यपादयन् ॥

ग्रन्थपरिचयः

यथा हि --"मुमुक्षुणा खलु, परमात्मा जगदुदयादिनिमित्तत्वेनावश्यमवगन्तव्य इति सकलसच्छास्त्राणामविप्रतिपन्नोऽर्थः" इत्यादिनाऽत्र ग्रन्थादौ प्रतिपादितदिशा संसारसागरतारणैककारणतरणिभूतेन जगदुदयादिनिमित्तत्वप्रकारकपरमात्मज्ञानेनैव भवबन्धान्मोचनं भवेन्नान्यथेति ॥

यथा च आदौ "स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्त्वमिष्यते' इत्यभिधाय "सृष्टिस्स्थिति" रित्यारभ्य, "विष्णुनास्य समस्तस्य" इति --- अन्ते प्रतिपादितेन भगवद्भाष्यकारवचनेन, तथा — "परतन्त्रप्रमेयं स्वतन्त्रप्रमेयायत्ततया विदितं हि निश्श्रेयसाय भवति ।....अतः स्वतन्त्रास्वतन्त्रभेदात् द्विविधं तत्त्वमिति स्वतन्त्रतत्त्वस्य प्राधान्यात्तदेवादावुद्दिष्टम्" इति श्रीमट्टीकाकाराणां वचनेन च, निश्श्रेयसोपयोगिज्ञानविशेष्यत्वरूपं प्राधान्यं विवक्षितम् ॥

उक्तं हि तत्त्वविवेके — एतत्प्रकरणशेषभूते —

"य एतत्परतन्त्रन्तु सर्वमेव हरेस्सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥ इति च ॥

एवञ्च—तादृशतत्त्वज्ञानसमनन्तरसमुद्भूतसम्यग्दर्शनसञ्जातसंप्रसादः सकलसद्गुणसमलङ्कृतपरमपुरुषानुगृहीतो हि जीवः निखिलपरिक्लेशप्रहाणेन प्रभूतानन्दानुभवोऽवतिष्ठत इति निश्चप्रचम् ॥

एतादृशस्यास्य तत्वसङ्ख्यानस्य बह्वर्थगर्भस्य मिताक्षरस्य न सर्वे यथावदर्थं जानीयुरिति — **श्रीजयतीर्थश्रीमच्चरणैः**, पूर्वस्मिन् जन्मनि श्रीमद्भगवत्पादसुषेवणविज्ञातश्रीमदाचार्यग्रन्थगभीरभावैः, पदवाक्यप्रमाणपारावारपारीणैः, सौजन्यसौशील्य-

टीकाकृत्पादानां परिचयः

ज्ञानभक्तिवैराग्याद्यात्मगुणगणरत्नरत्नाकरैः, करुणावरुणालयैरुदारचरितैः श्रीमदाचार्याणां ग्रन्थजातस्य टीकाकरणैकबद्धपरिकरैः, तदर्थमेवावनितलमवतीर्णैः, अत एव टीकाकारा इति प्रसिद्धिमापन्नैः, "सुधा वा पठनीया वसुधा वा पालनीया" इत्यभियुक्तोक्तरीत्या, अतिगम्भीरया विपुलया च वाचा साधितसत्क्रियैः, बाल्य एव सुगृहीततुर्याश्रमैः, मुनिश्रेष्ठैरेतानि टीकैका सुबोधा सर्वान्तरङ्गरमणीया च ॥

सर्वज्ञकल्पा महानुभावा एते टीकाचार्याः श्रीपण्ढरपुरक्षेत्रप्रान्ते "मङ्गलवेढ्" आख्ये ग्रामे श्रीरघुनाथरायमहोदयानामात्मजत्वेनावतीर्य, विंशतिवर्षदेशीयाः, श्रीमदाचार्याणामन्तेवासिभ्यः श्रीमद्भ्यः अक्षोभ्यतीर्थश्रीचरणेभ्यः निखिलान्यपि शास्त्राण्यधीत्य, श्रीमत्सर्वज्ञाचार्याणामाज्ञां शिरसा वहन्तः तुरीयाश्रमपदवीमवाप्य, (तीर्थस्य) शास्त्रस्य जयशीलत्वं भविष्यतीति "जयतीर्थ" त्यभिधेयतामापन्नाः, तत्वप्रकाशिकाद्यष्टादशटीकाग्रन्थान्, प्रमाणपद्धत्यादीन् पञ्च स्वतन्त्रग्रन्थान् विनिर्माय, विभवाषाढकृष्णपञ्चम्यां (1388 A.D.) कागिनीनदीतीरपरिसरविराजमान (मान्यखेड्) मलयाद्रि - अपरनामक - मलखेडा - क्षेत्रे बृन्दावनं प्रविश्य, सर्वदा, सर्वथा भक्तान् शिष्यजनाननुगृह्णन्तीत्यतिरोहितमेतत्सर्वेषाम् ॥

एतस्याश्च टीकायास्सन्ति बहूनि व्याख्यानानि । तेषु कानिचित् सम्मुद्रय प्रकाशितान्यपि नैवेदानीमुपलभ्यन्ते । कानिचित् केवलं तालपत्रमात्रशरणान्येव विराजन्ते ॥

तत्र भाववर्णनाभिधं, पञ्जिकाख्यं च व्याख्याद्वयं जिज्ञासूनां विदुषां च महते उपकाराय प्रभवतीति मन्वानाः, घटोदरप्रक्षिप्तदीपवत् कुत्रचिन्निलीनानाम् अत एव मलिनीभूतानामावश्यकानां ग्रन्थानां मुद्रापणेऽत्यन्तमादरेण त्वरमाणाः एतत्प्राच्यकलापरिशोधनालयाध्यक्षमहोदयाः, एतद्ग्रन्थपरिशोधने मां प्रेरयामासुः ॥

तत्राद्यं—**श्रीमद्भिः विजयीन्द्रसंयमीन्द्रैः**, तुङ्गभद्रनिम्नगातटस्थमन्त्रालयक्षेत्रमधिवसच्छ्रीमद्राघवेन्द्रतीर्थश्रीचरणानां प्राचार्यैः, अप्पय्यदीक्षितसमकालैः, वादेन ग्रन्थप्रणयनादिभिश्च विष्णोः सर्वोत्तमत्वं जीवेशयोर्भेदादिकं च सुदृढं घण्टाघोषेण च निरूपितवद्भिः, "चातुर्यैकाकृतिर्यश्चतुरधिकशतग्रन्थरत्नप्रणेता" ......इत्युक्तरीत्या—चतुरधिकशतग्रन्थप्रणेतृभिर्मुनिवर्यैः प्रणीतम् ॥

श्रीमद्विजयीन्द्रतीर्थानां परिचयः

एते चाचार्याः षोडशे शतके (1514-1595 A. D.) अलङ्कुर्वन्ति स्म दक्षिणदेशम् ॥

प्राप्ते युक्ते वयसि कृतोपनयनसंस्काराः, अधीततर्कव्याकृतिजैमिनीयतन्त्राः— अधिगतसर्वतन्त्रेभ्यः वेदान्तसाम्राज्याभिषिक्तेभ्यः श्रीमच्चन्द्रिकाचार्या इति ख्यातिमापन्नेभ्यः **श्रीमद्व्यासराजतीर्थश्रीपादेभ्यः**,

"षड्वारं व्यासराजेन्दुमुखाच्छ्रुत्वा विशेषतः ।
मध्वशास्त्रार्थसारं तु व्याचक्षाणं निजान् प्रति ॥
नवकृत्वो न्यायसुधां व्यासतीर्थपयोनिधेः ।
उद्धृत्य पीतवन्तं च नाकीन्द्रमिव सन्नुतम् ।"

इति प्रमाणतः—सत्सिद्धान्तमधीत्य श्रीसह्यजातीरपरिसरविराजमानकुम्भघोणाख्यक्षेत्रवर्यमधिवसन्तः श्रीमद्भगवत्पादानां सिद्धान्तप्रवचनमकुर्वन् ॥

द्वितीयं तु व्याख्यानं—पाणिन्यादितन्त्राभिज्ञैः अत्यन्तविद्याविशारदैः महनीयशीलैः **श्रीरोट्टीवेङ्कटभट्टोपाध्यायैर्विरचितं** विविदिषूणां महदुपकरोतीति न बहु वक्तव्यम् ।

श्रीरोट्टीवेङ्कटभट्टानां परिचयः

एते च पण्डितवराः कञ्चन कालं श्रीमदुत्तरादिमठे भगवत्कैङ्कर्यपरास्सन्तः, पश्चाद्वाराणसीवासिभ्योऽधीतगौतमीयादितन्त्राः श्रीमदुत्तरादिमठाधीशवर्येभ्यो वेदान्तेष्वधीतिनः, दक्षिणापथे आम्रावतीतीरे कस्मिंश्चन ग्रामे

मण्डनायमानानां, लोकविश्रुतयशःप्रभावविशिष्टानां, '**आर्याचार्या**' इत्यपरनामधेयानां मूलपुरुषाणां नृसिंहाचार्याणां स्तुतौ----

रोट्टीपदोपपद - वेङ्कटभट्टसूरिः
श्रुत्वा सुधार्थमुपमिति यदीरितं तम् ।
अस्तौत्समीपमुपगम्य सभासु तस्मै
श्रीमन्नृसिंहगुरवेऽस्तु मम प्रणामः ॥

इति "आर्याचार्यगुणमालास्तवे" एषामाचार्याणां स्मरणेन तत्समकालिकत्वमिति निर्णेतुं शक्यते ॥

**स्मृत्यर्हाः**

ग्रन्थस्यास्य परिशोधनकर्मणि प्रवृत्तस्य मम एकैव समुपलब्धा लिखिता मातृका। तत्रापि क्वचित् क्वचित् लेखकानवधानजातं पौर्वापर्यमुपलब्धम् । तत्समीकरणेन दुरवगाहविषयावबोधनेन, एतन्मातृकाकोशविश्राणनेन चोपकृतवद्भ्यः विद्यागुरुभ्योऽस्मच्छ्वशुरपादेभ्यः, षट्त्रिंशत्संवत्सरानत्रैव महाकलाशालायां व्याकरणप्रधानाध्यापकपदवीमलङ्कृत्य, सांप्रतं विश्रान्तेभ्यः वार्धकेऽप्यस्मिन् वयसि नितान्तं निगमान्तदर्शनदर्शनैकमुख्यवृत्तिभ्यः, इदानीं पद्मसरोवरं (Tiruchanur) पुरमधिवसद्भ्यः, आर्याचार्यकुलावतंसानां भुवनभूषितानां 'वैयाकरणकेसरी'त्यादिबिरुदभाजां **महामहोपाध्याय**-व्याकरणं-श्रीमुष्णं **सुन्दररायाचार्याणा**-मात्मजेभ्यः मध्वसिद्धान्तभूषण-**महामहोपाध्याय**-व्याकरणं-श्रीमुष्णं **श्रीसेतुमाधवाचार्येभ्यः** (Maha mahopadhyaya Vyakaranam Srimushnam Sri S. Sethumadhavacharya, Rtd. Prof. Sri Venkateswara Sanskrit College, Tirupati). नितारां नतिपरम्परामर्पयामि ॥

**धन्यवादाः**

इदमिदानीमतीव प्रमोदस्थानम्— यदस्मिंश्च कालेऽपि कलौ, अभिवर्धमानेऽपि नास्तिकप्रचारे, अत्रत्यदेवस्थानाधिकारिणः धर्मकर्तृसङ्घसभ्याः (Board of Trustees, Tirumala-Tirupati Devasthanams, Tirupati.) तथा—सत्यपि **कार्यान्तरभारे** एतादृशे महति

धनालयाध्यक्षाः, आजानपूतसद्वंशजातानां नानातन्त्रस्वतन्त्राणां महामहोपाध्याय परवस्तु श्रीरङ्गाचार्यस्वामिनां पौत्राः, श्री परवस्तु वेङ्कटरामानुजस्वामि-महाशयाश्च (Sri P. V. Ramanujaswamy, M.A., Director, Sri Venkateswara Oriental Institute) प्राच्यकलाप्रचारसरण्या, वेदवेदान्तादिधर्मप्रतिपादकसद्ग्रन्थरत्नप्रचारबद्धदीक्षाः -- भक्त्यैकगम्यस्य भक्तपरायणस्य स्वाश्रितसकलभक्तजनताऽभीष्टप्रदानकामधेनोः सकलकल्याणगुणाकरस्य भगवतः श्री श्रीनिवासस्य दिव्यभाण्डागारद्रविणेन एतादृशसत्कार्याण्याचरन्तीति नैव वक्तव्यं विशेषतो विपश्चिदपश्चिमानामिति ॥

अस्मिन् ग्रन्थोपस्कारकर्मणि मां प्रेरितवतां महाशयानां मामकीना हार्दिका धन्यवादाः ॥

इदमन्यच्च महत्प्रमोदस्थानं— यदस्मिन् "जय" वत्सरे श्रीमद् "उज्जय" तीर्थानां परमपावनोऽयं प्रबन्धस्तेषां पुण्यदिनेऽस्मिन् सम्प्रकाश्यतेऽत्रेति ॥

ग्रन्थमेनं सश्रद्धं सम्यङ्मुद्रितवतां श्रीदेवस्थानमुद्रणालयाधिकारिणां तथा तत्कार्यकराणाञ्च सर्वदा कृतज्ञो भवामि ॥

ग्रन्थेऽस्मिन् मनुजमात्रसाधारणेन प्रमादादिना अङ्कनदोषेण वा 'गच्छतः स्खलनं' न्यायेन दोषान् समुपलभ्यमानान्, गुणग्रहणैकपक्षपातिनो विद्वद्वरेण्याः "गुणदोषौ बुधो गृह्णन्" इति सूक्तिमनुसृत्य परिशोध्य, मामनुगृह्णन्त्विति साञ्जलिबन्धं सप्रश्रयं प्रार्थये ॥

॥ श्रीकृष्णार्पणमस्तु ॥

इति

विदुषामनुचरः

रा. राममूर्तिशर्मा

व्याकरणप्रधानाध्यापकः

श्रीवेङ्कटेश्वर-
प्राच्यमहाकलाशाला, तिरुपति.
श्रीजयाषाढ-कृष्ण पञ्चमी

# ॥ तत्त्वसङ्ख्यानम् ॥



स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्भावाभावौ द्विधेतरत् ॥

प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।
चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥

दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् ।
नित्याऽदुःखा रमाऽन्ये तु स्पृष्टदुःखास्समस्तशः ॥

स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ।
दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ॥

देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ।
एवं विमुक्तियोग्याश्च तमोगाः सृतिसंस्थिताः ॥

इति द्विधा मुक्त्ययोग्याः दैत्यरक्षःपिशाचकाः ।
मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ॥

ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ।
नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् ॥

नित्या वेदाः, पुराणाद्याः कालः प्रकृतिरेव च ।
नित्यानित्यं त्रिधा प्रोक्तमनित्यं द्विविधं मतम् ॥

असंसृष्टं च संसृष्टमसंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ॥
संसृष्टमण्डं तद्ब्रह्म समस्तं संप्रकीर्तितम् ॥

सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।
बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ॥
विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ॥



श्री हयग्रीवाय नमः

श्रीमज्जयतीर्थभिक्षुविरचिता

# तत्त्वसङ्ख्यानटीका

व्याख्याद्वयोपेता

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः

लक्ष्मीपतेः पदाम्भोजयुगं नत्वा गुरोरपि ।
करिष्ये तत्त्वसङ्ख्यानव्याख्यानं नातिविस्तरम् ॥

---

श्रीः

श्रीलक्ष्मीनृसिंहाय नमः

## श्री विजयीन्द्रतीर्थविरचितं भाववर्णनम्

प्रणम्य श्रीपतेः पादपद्मयुग्मं गुरोरपि ।
करिष्ये तत्त्वसङ्ख्यानव्याख्याया भाववर्णनम् ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नपरिसमाप्त्यर्थं कृतं नमस्काररूपं मङ्गलं शिष्यशिक्षायै निबध्नन् चिकीर्षितं प्रतिजानीते — लक्ष्मीपतेरिति ॥ लक्ष्मी-

---

श्रीः

## श्री रोट्टि वेङ्कटभट्टविरचिता पञ्चिका

रमारमणमाचार्यं जयार्यं च गुरून्नुमः ।
कुर्मोऽथ तत्त्वसङ्ख्यानव्याख्यायाः पञ्चिकां पराम् ॥
व्यक्तं त्यक्त्वा यदव्यक्तं तद्व्यक्तीक्रियते मया ।
मूलमत्र समालोच्य न चोन्मूलं विलिख्यते ॥

ग्रन्थादौ प्रारिप्सितसमाप्त्या[1]दिफलकमङ्गलाचरणपूर्वकं चिकीर्षितं प्रतिजानीते — लक्ष्मीपतेरिति ॥ ग्रन्थारम्भसमये सकलवाङ्मनसदेवताया लक्ष्म्या

---

1. आदिना प्रचयादिग्रहः ।

**मुमुक्षुणा खलु परमात्मा जगदुदयादिनिमित्तत्वेनावश्यमवगन्तव्य**

श्री विजयीन्द्रतीर्थाः ॥

पतित्वेनोत्कीर्तनं नम्यपदाम्भोजयुगस्य भगवतो विशिष्टेष्टाधिकृतत्वसूचनाय। नत्वेति प्रधानक्रियामात्रापेक्षया न पूर्वकालत्वं क्त्वाप्रत्ययार्थः, किन्तु करिष्यमाणापेक्षया तद्विवक्षितम्। एवञ्च लक्ष्मीपतिनतेः गुरुनत्यपेक्षया पूर्वकालत्वे दर्शिते गुरुनमादिक्रमेणैव नतिः कर्तव्येत्यपि शिक्षितमिति वेदितव्यम् ॥

ननु तत्वविचारस्य मोक्षसाधनतत्त्वज्ञानार्थत्वात् तस्य च [1]शास्त्रे कृतत्वात् तत एव तत्त्वज्ञानसम्भवात् पुनस्तद्विचारार्थमेत[2]त्प्रकरणमनारम्भणीयमित्याशङ्क्याह — **मुमुक्षुणेत्यादि** ॥ मुमुक्षुणेत्युपलक्षणम्। शमादिमतेत्यपि बोध्यम्। खलु — वाक्यालङ्कारे प्रसिद्धे वा। परमात्मा = परं ब्रह्म, विष्णुरिति यावत्। जगच्छब्देन कार्यप्रपञ्चो विवक्षितः। कार्याकार्यप्रपञ्च एव वा तयोरपि जन्यत्वव्यपायाभ्यां [3]तन्निमित्तकत्वमस्तीति न कोऽपि दोष इति ध्येयम्। उदयादीत्यादिपदेन स्थितिसंहारनियमनेत्यादिव्यापारो बोद्धव्यः। जगत्प्रत्युपादानत्वं असंभवात् परमात्मनोऽनभिमतमिति सूचयितुं निमित्तत्वेनेत्युक्तम्। कर्मणोऽपि तत्वज्ञानद्वारा मोक्षोपायत्वं, न तु तस्य तत्वज्ञानेन समं समुच्चय इति सूचनायावश्यमित्युक्तम्। 'ब्रह्मविदाप्नोति पर' मित्यादि श्रुतिबलेन तत्वज्ञानस्य

श्री रोट्टि वेङ्कटभट्टाः ॥

अपि नम्यत्वादेवमुक्तम्। पदे अम्भोजे इव पदाम्भोजे, तयोर्युगम्। शब्दस्यैवात्र प्रपञ्चो निषिध्यते नार्थस्येति **'नातिविस्तर' मिति** ऋदोरबिति अबन्तशब्द प्रयुञ्जानस्य भावः ॥ ननु — परापरतत्वविवेकपरमिदं प्रकरणं नारम्भणीयम्, अधिकार्या[1]दिशून्यत्वात्, अतस्तत् न व्याख्येयमित्यत आह — **मुमुक्षुणेति** ॥ मुमुक्षुणा = अधिकारिणा, परमात्मा विषयः, जगदुदयादिनिमित्तत्वेन प्रकारेण अवश्यं मोक्षस्यान्यथाविरहान्मोक्षार्थं विज्ञेय इति, "यतो वा इमानि भूतानि जायन्ते, अथाऽतो ब्रह्मजिज्ञासा, जन्माद्यस्य यत" इत्यादि श्रुतितन्मीमांसादिसच्छास्त्राणां निर्णीतोऽर्थ इत्यर्थः। तर्हि परतत्वमेव विषयभूतं विविच्यतां, किं

इति सकलसच्छास्त्राणामविप्रतिपन्नोऽर्थः । इदश्चावान्तरानेकभेद-भिन्नस्य जगतो विज्ञानमपेक्षत इति जगदपि तथाऽवगन्तव्यम् । तदिदं प्रधानाङ्गभूतं तत्वद्वयं शास्त्रे विक्षिप्य प्रतिपादितं शिष्यहित-तया सङ्गृह्य प्रतिपादयितुं प्रकरणमिदमारभते भगवानाचार्यः ॥

---

श्री विजयीन्द्रतीर्थाः ॥

मोक्षोपायत्वप्रतिपादनायावगन्तव्य इत्युक्तम् । अत एव मुमुक्षुणेत्याह ॥ **इदश्चेति** ॥ जगदुदयादिनिमित्तत्वप्रकारकपरमात्मज्ञानमित्यर्थः ॥ **अवान्तरेति** ॥ अशेषजगद्वृत्तिधर्मव्याप्यानेक[1]वैधर्म्यरूपभेदवत इत्यर्थः । एवञ्च जगतो विज्ञा-नान्वये भेदस्य विशेषणत्वेन वैधर्म्यप्रकारकज्ञानविषयीभूतजगदुदयादिनिमित्तत्वेन परमात्मज्ञानं मोक्षसाधनमित्यपि सूचितं भवति। अत एव[2] भगवान् 'द्विधेतर'-दित्यादिना विशेषरूपेणापि जगद्विभजते — **विज्ञानमपेक्षत इतीति** ॥ अननुसंहितोपाधे[3]रुपहित[4]प्रत्ययायोगादिति भावः ॥ **तथेति** ॥ अवान्तरानेक[5]-भेदवत्त्वेनेत्यर्थः ॥

---

श्री रोट्टि वेङ्कटभट्टाः ॥

अपरतत्वविवेकेनेत्यत आह — **इदं चेति** ॥ इदं = परमात्मज्ञानम् ॥ **अवान्तरेति** ॥ उदयादीनां[6]वक्ष्यमाणरीत्या प्रतिनियतत्वादिति भावः । **अपेक्षित इति** ॥ निमित्तज्ञानस्य नैमित्तिकज्ञानाधीनत्वात्, अत आह — **तथेति** ॥ अवान्तरानेकभेदभिन्नत्वेनेत्यर्थः । नन्वेतच्छास्त्रीयमधिकार्यादि नास्य ग्रन्थस्यारम्भ-णीयत्वं प्रयोजयतीत्यत आह—**तदिदमिति** ॥ प्रधानभूतमङ्गभूतं च तत्त्वमित्यर्थः ॥ **प्रकरणमिति** ॥ सर्वत्र प्रकरणस्य शास्त्रीयाधिकार्यादिनैव अधिकार्यादिमत्त्वम् । अन्यथा प्रकरणमात्रस्यैवानारम्भणीयत्वप्रसङ्गादिति भावः ॥

---

1. परस्परासमानाधिकरणेत्यर्थः । 2. स्वयोग्यैश्वर्यादिगुणवानाचार्य इत्यर्थः । 3. धर्मस्य । 4. विशेषणविशिष्टप्रत्ययायोगात् । विशेषधर्मविशिष्टज्ञानायो-गादिति यावत् । 5. व्यावर्तकधर्मेत्यर्थः । 6. सृष्टिस्स्थितिरित्यादिना एतद्-ग्रन्थान्ते भगवत्पादैरिति योज्यम् ।

**ननु प्रकरणादौ मङ्गलं किमपि कस्मान्नानुष्ठितम्, न तावत्तद-फलमेव, प्रेक्षावद्भिरनुष्ठितत्वात्। नापि प्रारिप्सितपरिसमाप्त्यादिव्य-तिरिक्तफलम्, नियमेन प्रारम्भे तदनुष्ठानात्; उच्यते — अनुष्ठित-मेव भगवता मङ्गलम्। मानसादेरपि तस्य सम्भवात्।**

---

श्री विजयीन्द्रतीर्थाः ॥

निबद्धस्यैव नमस्कारादेर्मङ्गलत्वं मन्वानः शङ्कते — **नन्विति ॥ प्रेक्षावद्भिरित्यादि ॥** अभ्रान्तकृतिविषयत्वादित्यर्थः। निष्ठार्थस्य [1]कृत्यतीतत्वस्य व्यर्थत्वादिति भावः। परिसमाप्त्यादीत्यादिपदेन शिष्यार्थदानाविच्छेदरूप-प्रचयगमनपरिग्रहः ॥ **प्रारिप्सितपरिसमाप्त्यादिव्यतिरिक्तेति ॥** तादृश-समाप्त्याद्यफलमित्यर्थः। **नियमेनेत्यादि ॥** प्रारब्धपरिसमाप्त्यादिकामनया [3]अभ्रान्तिकृतिविषयत्वादित्यर्थः। निबद्धस्यैव मङ्गलत्वं नेत्यभिप्रेत्य परिहरति— **उच्यत इति ॥**

---

श्री वेङ्कटभट्टाः ॥

ग्रन्थनिवेशनमेव मङ्गलानुष्ठानमिति मन्वानश्शङ्कते — **नन्विति ॥** प्रारिप्सितसमाप्त्यादिफलकमिति शेषः। प्रारिप्सितपरिसमाप्त्यादिफलकत्व-सिद्ध्यर्थं परिशेषमाह — **न तावदित्यादिना ॥** यद्वा "मङ्गलं प्रारिप्सित-परिसमाप्त्यादिफलकं, तदितराफलकत्वे सति सफलत्वात्" इत्यभिप्रेतानुमाने विशेष्यविशेषणासिद्धी क्रमेण परिहरति — **न तावदित्यादिना ॥ अफल-मिति ॥** अभीष्टाफलकमित्यर्थः ॥ **प्रेक्षावद्भिरिति ॥** अभ्रान्तैरित्यर्थः। न च सुखाद्यनुभवे व्यभिचारः, स्वरससुन्दरभिन्नत्वे सतीति विशेषणादिति भावः ॥ **नियमेनेति ॥** प्रारिप्सितसमाप्त्यादिव्यतिरिक्तोद्देशेनानुष्ठानादिति भावः। एतेन — यथाश्रुते 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, दर्शपौर्णमासावारिप्स-मान' इति श्रुतिबोधितायां, दर्शादेरारम्भे नियमेनानुष्ठीयमानायामारम्भणीयेष्टौ, प्रारिप्सितसमाप्त्यादिव्यतिरिक्तस्वर्गफलिकायां व्यभिचारः, प्रारिप्सितसमाप्त्युद्देशे-नानुष्ठानस्य विवक्षायां, तत एव समाप्तिफलकत्वसिद्धेः परिशेषवैयर्थ्यमिति निरस्तम्। न हि ग्रन्थनिवेशनमेव मङ्गलानुष्ठानमित्यभिप्रेत्य परिहरति—

तच्च परमास्तिकत्वादनुमीयते। यच्चायं स्वातन्त्र्यादिविशिष्टस्य विष्णोरादित एव सङ्कीर्तनं करोति, किं ततोऽन्यन्मङ्गलं नाम। अन्यपरमपि तद्भक्त्यानुष्ठितं स्वभावात्संपादयत्येवाखिलमङ्गलानीति ॥

---

**श्री विजयीन्द्रतीर्थाः ॥**

[1]**मानसादेरपीति** ॥ अनिबद्धस्येति शेषः। तथा चानिबद्धस्यापि कायिकादेस्त्रिविधस्य मङ्गलत्वसम्भवान्न निबन्धनाभावे मङ्गलकरणाभाव इत्यर्थः। ननु किं मानं [2]तत्कृतमित्यत्रेत्यत आह — **तच्चेति** ॥ अनुमानं च — भगवान् कृतमङ्गलः, परमास्तिकत्वात्, सत्सम्प्रदायप्रवर्तकत्वात्, सम्प्रतिपन्नवदिति। परिसमाप्तकर्मविशेषत्वादिति वा ॥ नन्वेतावतापि एतद्ग्रन्थारम्भसमये मङ्गलं कृतमित्यत्र किं मानमत आह — **परमास्ति[3]कत्वादिति** ॥ तस्य सत्सम्[4]प्रदाय प्रवर्तकत्वेन प्रसिद्धेरित्यत्र तात्पर्यादिति भावः। निबद्धस्यैव मङ्गल[5]त्वमभिप्रेत्याह — **यच्चायमिति** ॥ ननु वाक्यार्थप्रतीतिपरस्यास्य कथं मङ्गलतेत्यत आह — **अ[6]न्यपरमपीति** ॥ स्वभावात् = साम[7]र्थ्यात्। अखिलमङ्गलानि = समाप्त्यभीष्टानि ॥

---

**श्री वेङ्कटभट्टाः ॥**

**मानसादेरिति** ॥ ग्रन्थे निवेशनातिरिक्तस्य मानसादिमङ्गलानुष्ठानस्यापि सम्भवादित्यर्थः। तथाच ग्रन्थे निवेशनमेव तदनुष्ठानमित्यसिद्धमिति भावः। ननु ग्रन्थे निवेशनमेव तदनुष्ठानमिति न ब्रूमः, किन्तु निवेशनं तद्व्याप्यमिति। एवञ्च तत्कालीने मानसादिमङ्गलानुष्ठाने प्रमाणान्तराप्रवृत्त्या ग्रन्थे निवेशनमेव व्याप्यतया प्रमापकं वाच्यम्, व्याप्यान्तरादर्शनात्। तथा च — रूपाद्युपलब्ध्येकप्रमाणकस्य चक्षुरादे रूपाद्युपलब्ध्यभावे व्यतिरेकनिर्णयः, सन्देहो वा यथा, एवं ग्रन्थनिवेशनैकप्रमाणकस्य मङ्गलानुष्ठानस्य तदभावे व्यतिरेकनिर्णयो

---

1. मनसा कृतमङ्गलादेरपीत्यर्थः आदिना कायिकवाचिकयोर्ग्रहः। 2. मानसादिमङ्गलम्। 3. शास्त्रोक्तपारलौकिकस्वर्गनरकादेर्वास्तवत्वनिश्चयादित्यर्थः। 4. सदाचारसम्प्रदायप्रवर्तकत्वादित्यर्थः। इदमपि परमत्वोपपादकम्। 5. मङ्गलत्वमिति वादमभिप्रेत्य तदनुसारेणापीत्यर्थः। 6. तत्वद्वैविध्यबोधनपरमपि। 7. अनितरसाधारणभगवद्गुणबोधकत्वेन तस्याशुभ-[illegible]

**तत्र तावत्तत्त्वं सामान्यतो विभागेनोद्दिशति — स्वतन्त्रमिति ॥**

श्री विजयीन्द्रतीर्थाः ॥

**तत्रेति ॥** कर्तव्यतात्वेन बुद्धिस्थानां उद्दे[1]शलक्षणविभागपरीक्षाणां मध्य इत्यर्थः । यद्वा तत्रेति निमित्तसप्तमी । तेन विशेषतो जगद्ज्ञानार्थमित्यर्थः । सामान्यतो ज्ञाते विशेषजिज्ञासोदयादिति भावः । सामान्योद्देशविभागयोः विशेषोद्देशविभागद्वारा लक्षणपरीक्षाङ्गत्वमिति भावेनोक्तम् — तावदिति ॥ 'द्विविधं तत्त्वमिष्यत' इत्यादिना सामान्योद्देशविभागकरणात् 'भावाभावौ द्विधेतर'दित्यादिना च विशेषोद्देशविभागकरणात् नेदं तेन गतार्थमित्याशयेनाह — **सामान्यत इति ॥** एवञ्च तत्त्वमित्यनेन तत्त्वस्य

श्री वेङ्कटभट्टाः ॥

वा सन्देहो वा स्यादिति कथमनुष्ठितमेवेति निर्णय इत्यत आह — **तच्चेति ॥** व्याप्यान्तरसत्त्वात् ग्रन्थे निवेशनमेव तद्व्याप्यमित्यसिद्धमिति भावः ।

अनुमानं तु — अयं ग्रन्थारम्भः अनुष्ठितमङ्गलकः, परमास्तिककर्तृकत्वात्, भगवत्पादकर्तृकत्वाद्वा, भाष्यादिवदिति बोध्यम् । किञ्च किमिदं ग्रन्थनिवेशनं नाम, किं मङ्गलत्ववाचकशब्दनिवेशः? ग्रन्थादौ मङ्गलात्मकशब्दनिवेशो वा? नाद्यः — मायावादखण्डनादौ स्तौमीत्येवमनुक्तावपि नृसिंहस्तुत्यात्मकमङ्गलानुष्ठानस्य ज्ञातत्वात् । द्वितीयेतु — प्रकृतेऽप्यस्तीत्याह — **यच्चार्यमिति ॥** स्वातन्त्र्यादीत्यादिशब्देन तत्त्वतापरिग्रहः । तत्त्वतायास्तत्त्वान्तरसाधारण्यात् स्वातन्त्र्यस्य आदित्वेन ग्रहणमिति बोध्यम् ॥

ननु युज्यते नृसिंहस्तुत्यात्मकशब्दनिवेशस्य मङ्गलानुष्ठानत्वादिकं, स्तुतिरूपमङ्गलत्वेनैव तन्निवेशात्, स्वातन्त्र्यादिसङ्कीर्तनस्य तु पदार्थान्वयप्रतीत्यर्थं कृतस्य कथं मङ्गलत्वमित्यत आह — **अन्यपरमपीति ॥** सूत्रादौ अथशब्दादिकमिवेति भावः ।

**तत्र तावत्तत्त्वमिति ॥** कर्तव्यत्वेन बुद्धिसन्निहितानां सामान्यविशेषविष[2]याणां उद्देशलक्षणविभागपरीक्षाणां मध्ये, विशेष[3]विषयाणामुद्दे-

स्वतन्त्रमस्वतन्त्रञ्च द्विविधं तत्त्वमिष्यते ।
स्वतन्त्रो भगवान् विष्णुर्भावाभावौ द्विधेतरत् ॥ १ ॥

**तत्त्वमनारोपितम् प्रमितिविषय इति यावत्** । तेन तस्य भाग-स्तत्त्वमित्यादिखण्डनानवकाशः ।

---

श्री विजयीन्द्रतीर्थाः ॥

सामान्यत उद्देशः । द्विविधमित्यनेन विभागः । स्वतन्त्रमस्वतन्त्रमित्यनेन तदेव द्वैविध्यं दर्शितमिति बोद्धव्यम् ॥

ननु — अनारोपितं आरोपाविषयः, भ्रमाविषय इति यावत् । न हि भ्रमाविषयः कश्चित्प्रसिद्धोऽस्तीत्याशङ्कानिरासायाह — **प्रमितिविषय इतीति** ॥ सर्वांशे प्रमाविषय इत्यर्थः । विवक्षाफलमाह — **तेनेति** ॥ तत्पदेनैव तत्पदार्थ-

---

श्री वेङ्कटभट्टाः ॥

शादीनां सामान्यविषयोद्देशादिपूर्वकत्वात्, तत्त्वं तावत्सामान्यतो द्विविधमिति विभज्य स्वतन्त्रं परतन्त्रं चेत्युद्दिशतीत्यर्थः । अनयोर्विभागोद्देशयोः 'भावाभावौ द्विधेतर' दिति करिष्यमाणविशेषविभागोद्देशापेक्षया सामान्यत्वं बोध्यम् । अलक्षितस्य विभागायोगात्, अनुद्दिष्टस्य लक्षणायोगादाक्षेपादेव कथासामान्योद्देश-लक्षणे इव तत्वसामान्योद्देशलक्षणे विभागाद्याक्षेपलभ्ये आवृत्त्या 'तत्वमिष्यत' इति कारिकाखण्डलभ्ये एवेति भावेन तत्वसामान्यलक्षणमाह— **तत्त्वमनारोपितमिति** ॥ नन्वारोपिते शुक्तिरजतादौ अतिव्याप्त्यभावेऽपि अनारोपिते कूर्मरोमादौ अतिव्याप्तमिदं लक्षणम् । न च यदि कूर्मरोमादिकं न प्रतीतं तदाऽतिव्याप्ते-रज्ञानात्, यदि प्रतीतं तर्हि असत्प्रतीतेरारोपत्वेन लक्षणाभावात्, न कोऽपि दोष इति वाच्यम् । लक्षणे वास्तवातिव्याप्तेः इतरभेदसाधने वास्तवव्यभिचारपर्य-वसन्नत्वेनावश्यं दोषत्वादिति चेत्, न । प्रतीतौ सत्यां अनारोपितत्वस्य लक्षणत्वेन विवक्षितत्वात् । एवञ्च यदि असत् प्रतीतं, तदाऽऽरोपितत्वेन विशेष्याभावात्, यदि न प्रतीयते तदा विशेषणाभावान्नातिव्याप्तिरिति भावः । तथा च एतत्समानार्थतया तत्वविवेकोक्तस्य तत्वलक्षणस्य साक्षित्वमपि सङ्गच्छत इति भावेनाह — **प्रमितिविषय इति यावदिति** ॥ एतदेवाभिप्रेत्योक्तं, तत्व-

ननु शुक्तिरजतादिकं कथं न तत्त्वम् । न हि धर्मी वा रज-
तत्वं वा न प्रमेयम् । नापि तयोस्सम्बन्धः । शुक्तिव्यक्तौ रजतत्वस्य

श्री विजयीन्द्रतीर्थाः ॥

निर्वचनम् । स्वतन्त्रस्यान्याधर्मतया तत्त्वतया तत्त्वं न स्यादिति खण्डनानवकाश इत्यर्थः । तत्त्वंपदार्थयोरुद्देशविधेयताऽऽदिशब्दार्थः । सिद्धान्तिनं नैयायिकं मत्वा शङ्कते — नन्विति ॥ शुक्तिरजतादेरपि देशान्तरे सर्वांशप्रमाविषयत्वादिति भावः । प्रमाविषयत्वमुपपादयति — न हीति ॥ तयोस्सम्बन्ध इति ॥ प्रमेयमित्यनुषङ्गः । सः = सम्बन्धः । सिद्धान्ती स्वस्मिन्नैयायिकत्वभ्रान्तिं वारयति — स्यादिदमिति ॥ अभ्युपगच्छतां नैयायिकानामिति

श्री वेङ्कटभट्टाः ॥

विवेकटीकायां 'अनारोपितं हि तत्व'मित्यादिना साक्षादसत्वादिप्रकारकप्रमाविषये तच्च प्रमेयमिति चैकोऽर्थ' इत्यन्तेन । प्रमयास्तीति विधीयमानत्वं विवक्षितम् । तेन परम्परया ईश्वरज्ञानानुव्यवसायादिप्रमाविषये साक्षादसत्त्वादिप्रकारकप्रमाविषये च शुक्तिरजतादौ नातिव्याप्तिरिति ध्येयम् । तेनेति ॥

यत् — 'तत्वानुभूतिः प्रमेति' प्रमालक्षणं खण्डयता खण्डनकारेण तत्वानुभूतिः प्रमेत्युक्तमयुक्तम् । तत्त्वशब्दार्थस्य निर्वक्तुमशक्यत्वात्, तस्य भावः — तत्वमुच्यते प्रकृतं च तच्छब्दार्थः, न चात्र प्रकृतं किञ्चिदस्ति, यत्, तच्छब्देन परामृश्येतेत्यादिना तत्वशब्दस्य योगार्थमाश्रित्य दूषणमुक्तम्, तस्य तत्वशब्दस्य अनारोपिते रूढ्यङ्गीकारेणानवकाशादित्यर्थः । यच्च तत्वशब्दस्य रूढिपक्षं खण्डयता खण्डनकृतोक्तम् — 'अथोच्येत — अवयवार्थचिन्तनया दूषणाभिधानं इदं त्यज्यताम् । यतोऽयं तत्वशब्दः स्वरूपमात्रवचने इति स्वरूपे रूढिमाशङ्क्य कथं च विपर्ययादेर्निरासः । तथाहि — यो रजतमिति — प्रत्ययः सोऽपि स्वरूपबुद्धिर्भवत्येव, न हि धर्मी वा रजतत्वं वा न स्वरूपम्, नापि तयोः प्रतिभासमानस्सम्बन्धः न स्वरूपमिति युक्तम् । समवायो हि तयोस्सम्बन्धः प्रतिभाति । स तत्स्वरूपमेव । सत्यं — समवायः स्वरूपः, स एव शुक्तिव्यक्तौ रजतत्वस्य नास्तीति चेत्, न — तत्रासत्वेऽपि स्वरूपतया

स नास्तीति चेत् मा भूत्। न हि गृहे देवदत्तो नास्तीत्येतावता न प्रमेय इति ॥

स्यादिदमारोपितस्यान्यत्र सत्तामभ्युपगच्छतां दूषणम्। अत्यन्तासदेव रजतं दोषवशाच्छुक्तिकायामारोप्यत इति वादे तु नायं दोषः।

श्री विजयीन्द्रतीर्थाः ॥

शेषः ॥ अत्यन्तासदिति ॥ नन्वत्यन्तासद्रजतं न प्रतीयेत, [1]तत्सामर्थ्यविरहादिति चेन्न। [2]विशेषादर्शनभेदाग्रहशुक्तीन्द्रियसन्निकर्षादिरूपाया दोषघटिताया: सामग्र्यास्सत्त्वात्। न च रजतसाक्षात्कारत्वेन रजतेन्द्रियसंयोगत्वेन कार्यकारणभावावधारणात्, प्रकृते च रजतसंयोगाभावात् कथं रजतसाक्षात्कारस्यादिति वाच्यम्। [3]रजतजन्य एव साक्षात्कारे रजतेन्द्रियसंयोगस्य कारणत्वात्। प्रकृते च तदभावात्। अन्यथा अन्यथाख्यातिवादेऽप्यगतेः[4]। तर्ह्यन्यथाख्यातिरेवास्तु, अविशेषादिति चेन्न; उक्तविशेषसामग्रीबलेन प्रमाणसिद्धरजतविलक्षणरजतस्यैव भ्रमविषयतया आवश्यकत्वेनान्यथाख्यातिवादस्य विशेषात्[5]। अत एव 'एतावन्तं कालं शुक्तिरेव अत्यन्तासद्रजतात्मना प्रत्यभादि'-त्युत्तरकालपरा[6]मर्शोऽप्युपपद्यते। किञ्च सत एव रजतरजतत्वनद्वैशिष्ट्यस्य भाने अभ्रमत्वप्रसङ्गात्। विशेष्य[7]निष्ठात्यन्ताभावप्रतियोगिप्रकारकत्वेन भ्रमत्वोपपत्तिरिति चेन्न। सत्त्वेन रजतादेः स्वात्यन्ताभावसमानकालीनत्वविरोधात्[8]।

श्री वेङ्कटभट्टाः ॥

अन्यत्र वृत्तेः, न हि देवदत्तो गृहे नास्तीति स्वरूपं न स्यादिति। तदेतदर्थतोऽनूद्य तुल्यन्यायतया प्रसक्तमिदं दूषणं नास्माकं, किन्तु वैशेषिकादीनामेवेत्याह — 'नन्वित्यादिना नायं दोष' इत्यन्तेन ॥ सम्बन्ध इति ॥ न प्रमेय इति वर्तते।

1. असतो वस्तुत्वाभावेन इन्द्रियस्य तत्सन्निकर्षाभावादित्यर्थः ॥ 2. रजतत्वग्राहकविशेषधर्मादर्शनम्। शुक्तिरूप्ययोर्भेदेनाग्रहेत्यर्थः ॥ 3. विषयस्यापि ज्ञानकारणत्वं विषयतया बोध्यम्। 4. गत्यभावात्। 5. भेदात्। 6. सार्वजनीनः स उपपद्यत इत्यर्थः। 7. अधिष्ठानभूतशुक्तीत्यर्थः ॥ 8. सतः पदार्थस्य अत्यन्ताभाव-

**एतेन भाविपाकरागः कुम्भः श्यामतादशायां रक्तपित्तिना रक्ततयोपलभ्यमानस्तत्वं स्यादित्यपि परास्तम् । भाविनः प्रमेयत्वेऽपि पूर्वस्य**

श्री विजयीन्द्रतीर्थाः ॥

स्वप्रतियोगिकाभावकालान्यकालत्वेनैवाविरोधकल्पनात् । प्रागभावप्रध्वंसाभावयोरेव तथा विशेषकल्पनायां गौरवात् । संसर्गाभावमात्रे प्रतियोगिकालान्यकालत्वेन लाघवादविरोधेनावस्थितिकल्पनात् । एवञ्च शुक्तिसम्बन्धतया प्रतीतस्य रजतादेरनन्यगत्याऽत्यन्तासत्त्वं त्वयापि वाच्यम् । तथा च नात्र रजतत्वमित्यादिबाधज्ञानरूपरजतत्वाद्यभावप्रत्यक्षस्य आकस्मिकत्वपरिहाराय तत्प्रतियोगिज्ञानरूपं कारणमवश्यमभ्युपेयम् । किञ्च भ्रमविषयस्य रजतस्य देशान्तरे सत्त्वं न भ्रमान्यथानुपपत्त्या कल्प्यम्, नापि बाधाऽन्यथाऽनुपपत्त्या, तयोः रजतदेशान्तरसत्त्वाविषयकत्वात् । न च सद्रजताज्ञानदशायामारोपासम्भवेन तदुपस्थितेरावश्यकत्वात्तदेवारोप्यत इति वाच्यम् । उपस्थितेरकरणत्वात् । न चातिप्रसङ्गः; तदुपस्थितिजनितसंस्कारस्यैव स्वरूपसतः तद्बोधकसमवहितस्य भ्रमकारणत्वाङ्गीकारेणातिप्रसङ्गाभावात् । न चैवं भ्रमस्य स्मृतित्वापत्तिः; संस्कारध्वंसवदस्मृतित्वोपपत्तेः । संस्कारमात्रासाधारणकारणकस्यैव स्मृतित्वादिति भावः ॥ **भावीति** ॥ श्यामतादशायां प्रतीयमानस्य रक्तरूपस्य भाविरक्तरूपाभेदे प्रमाणाभावादित्याशयः ॥

श्री वेङ्कटभट्टाः ॥

यदप्युक्तम्, यद्यथाभूतं प्रतीयते, तत्तथा परमार्थतो व्यवस्थितं तत्त्वमुच्यत इति यत्तदित्यादिघटितं तत्वलक्षणं खण्डयता खण्डनकृता भाविपाक इत्यादि, तदस्मत्पक्षे न प्रसरतीत्याह— **एतेनेति** ॥ एतेनेत्यस्यातिदेशमाह— **भाविन इति** ॥ **पूर्वस्येति** ॥ पूर्वप्रतीतस्येत्यर्थः । अयं भावः— किमत्र रागस्य तत्त्वताऽऽपाद्यते? धर्मिणः कुम्भस्य वा? आद्येऽपि— भाविनो वा? पूर्वमारोपितस्य वा? नाद्यः— भाविनो रागस्य रक्तपित्तदोषजन्यपूर्वारोपाविषयत्वेन

तथा (त्वाभावात् ।) भावाभावात् । धर्मिणस्तथाभावाङ्गीकारादिति ।

तद्विविधम् । स्वतन्त्रमस्वतन्त्रं चेतीति — इतिशब्दाध्याहारेण योज्यम् । अन्यथा स्वतन्त्रमस्वतन्त्रं च तत्त्वं प्रत्येकं द्विविधमिति प्रतीतिस्स्यात् ॥

स्वरूपप्रमितिप्रवृत्तिलक्षणसत्तात्रैविध्ये परानपेक्षं स्वतन्त्रम् ।

---

श्री विजयीन्द्रतीर्थाः ॥

तथात्वाभावात् ॥ तत्रावच्छेदेन सर्वांशप्रमाविषयत्वाभावात् ॥ अन्यथेति ॥ (इतिपदाध्याहाराभावे) स्वतन्त्रद्वैविध्यस्य [1]प्रमाणबाधितत्वं इतिशब्दाध्याहारे बीजमिति हृदयम् ॥

स्वतन्त्रं प्राधान्याल्लक्षयति[2] — स्वरूपेति ॥ स्वनिष्पत्ति – स्वप्रमिति –

---

श्री वेङ्कटभट्टाः ॥

एवमाक्षेपात् कारिकाखण्डाद्वा लब्धं तत्त्वसामान्यलक्षणमाख्याय विभागोद्देशपरं वाक्यं व्याचष्टे — द्विविधमिति ॥ संज्ञानिरुक्तिरेव तयोर्लक्षणमिति भावेन निर्वक्ति — स्वरूपेति ॥ परानधीनसत्ताकत्वं, तदधीनसत्ताकत्वं [3]चेत्यर्थः, तेन[4] एकविधसत्ताघटितस्यैव लक्षणत्वसम्भवात् सत्तान्तरगर्भत्वे वैयर्थ्यमिति परास्तम् । लक्षणस्य सत्तासामान्यगर्भत्वात्, सत्तायाः त्रिविधसत्तानुगतिसूचनाय त्रैविध्योक्तेः ।

[5]एतेनैवापेक्षायाश्चेतनधर्मत्वेन [6]यथाश्रुते स्वतन्त्रलक्षणे अचेतनेऽतिव्याप्तिर्विवक्षितेत्यस्वतन्त्रमात्रेऽतिव्याप्तिरिति परास्तम् । अधीनताया एव अपेक्षापदेन विवक्षितत्वात् । अत एव परानपेक्षत्वतदपेक्षत्वयोरेव लक्षणत्वसम्भवे शेषवैयर्थ्यमिति निरस्तम् । यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावात् । न च

स्वप्रवृत्त्यन्यतमे परानपेक्षमित्यर्थः । [1]अत्र च कार्यप्रपञ्चस्य स्वनिष्पत्तौ स्वप्रमितौ स्वप्रवृत्तौ च परापेक्षत्वात्, [2]तदन्यस्य [3]चेतनस्याचेतनस्य[4] वा [5]स्वप्रमितौ स्वप्रवृत्तौ च परापेक्षत्वात्। [6]अव्यक्ततत्वस्यापि स्ववृत्तियावद्धर्मवत्तायाः स्वतन्त्र-विष्णुप्रमिति विषयत्वात्, [7]तत्प्रवृत्तिविषयत्वाच्च परापेक्षता । [8]स्वतन्त्रे विष्णौ तु नैवम्, तस्य स्ववृत्त्यशेषधर्मवत्तया स्वान्यप्रमितिविषयत्वाभावात्, स्वान्यप्रवृत्त्य-विषयत्वाच्चेति नाति[9]प्रसङ्ग इति भावः । [10]एवञ्चोक्तव्यतिरेकेण अस्वतन्त्रलक्षण-मपि स्पष्टं द्रष्टव्यम् ॥

---

श्री वेङ्कटभट्टाः ॥

असम्भवादिप्रसङ्गात् । उक्तं हि --'दिशः सर्वत्र पुरुषः स्वतन्त्रः कालनित्यता इत्यादिषु स्वसम्बन्धो यथे'ति । [11]तत्वविवेकटीकायां तु 'स्वसत्तादौ स्वाधीनं न तु परापेक्ष'मित्यत्र आदिपदं लक्षणत्रयसूचनाय स्वतन्त्रपदस्य स्वाधीनमिति पदार्थमुक्त्वा तस्य परतन्त्रलक्ष्म्यादावतिव्याप्तत्वात् 'न तु परापेक्ष'मिति तात्पर्य-मुक्तम् । ततश्च परानधीनसत्तासामान्यकत्वादि [12]कमेव लक्षणत्रयं[13] द्रष्टव्यम् ।

---

1. एतदेव विवृण्वन्, अस्वतन्त्रलक्षणविवरणमपि करोति—अत्रेत्यादिना द्रष्टव्य-मित्यन्तेन। 2. जन्यस्य । 3. अजन्यस्य, नित्यस्येति भावः " नित्यो नित्यानां चेतन-श्चेतनानां " इत्यादिश्रुतिस्मृत्यादयः चेतनानां नित्यत्वे मानम् । 4. अस्य नित्यत्वा-ऽनित्यत्वं "नित्यानित्यविभागेने" त्यादिना भगवत्पादा एव वक्ष्यन्ति । वाशब्द-श्चार्थे । 5. नित्यस्य सृष्टेरभावात् निष्पत्ताविति नोक्तम् । 6. मूलप्रकृतेः तदभि-मानिश्रीतत्वस्य चेत्यर्थः। 7. विष्णुप्रवृत्तीत्यर्थः। 8. स्वतन्त्रे एतदन्यतमोऽपि नेत्याह– स्वतन्त्र इति । 9. अस्वतन्त्रलक्षणस्य स्वतन्त्रे, स्वतन्त्रलक्षणस्यास्वतन्त्रे चातिप्रसङ्गो नेत्यर्थः। 10. एतेन अस्वतन्त्रलक्षणपरं "परापेक्षमस्वतन्त्र " मिति वाक्यं विवृतं भवतीत्याह—एवञ्चेति । स्वतन्त्रलक्षणाङ्गीकारेचेत्यर्थः। 11. तत्व-विवेकटीकायां "स्वाधीन" मित्युक्तिविरोधं परिहरति–तत्वेत्यादिना। 12. आ-दिना पराधीनसत्ताकत्वमिति अस्वतन्त्रलक्षणपरिग्रहः। 13. स्वरूपप्रमितिप्रवृत्ति-भेदेन त्रयमित्यर्थः।

**परापेक्षमस्वतन्त्रम्** । **तदुपपादनायोक्तं** 'इष्यत' इति । **प्रामाणिकै-रिति** शेषः । **तथाहि यदि तत्वमेव नास्तीति ब्रूयात् तदा प्रत्यक्षादि-विरोधः** । **भ्रान्तिस्सेति चेन्न, बाधकाभावात्** । **न च निरधिष्ठाना**

श्री विजयीन्द्रतीर्थाः ।।

नन्वेवंविधे तत्वे मानाभाव इत्याशङ्कायामाह — **तदुपपादनेति** ।। भ्रान्ताभ्युपगमेऽपि नैवंविधतत्त्वसिद्धिरित्यत आह — **प्रामाणिकैरितीति** ।। अनेन प्रमाणसूचनद्वारा अर्थात्परीक्षापि कृतेति बोद्धव्यम् ।। **तथाहीति** ।। स्वातन्त्र्यपारतन्त्र्याभ्यां तत्त्वद्वैविध्यं नाभ्युपगच्छति[1]; स प्रष्टव्यः — किं तत्त्व-मेव नास्ति, स्वातन्त्र्यादिना द्वैविध्यं कुत इति वा? तदस्तित्वेऽप्यनेकं नेति वा? अनेकत्वेऽपि सर्वमेव स्वतन्त्रमिति वा? सर्वमेवाऽस्वतन्त्रमिति वेति? । तत्र न तावदाद्य इत्याह — **यदि तत्वमेव नेति** ।। **प्रत्यक्षेति** ।। विषयं विना प्रत्यक्षस्याप्रसारात्, घटोऽयमिति प्रमेयमिति [2]तत्वताग्राहक[3]प्रत्यक्षादिविरोध इत्यर्थः ।

श्री वेङ्कटभट्टाः ।।

'इष्यत' इत्युक्तार्थे प्रमाणसूचनेन प्रकारान्तरनिरासात्परीक्षापि सूचिते-त्याह — **तदुपपादनायेति** ।। तत्र सामान्यलक्षणपरीक्षा प्रागेव कृता, विभागोद्देशपरीक्षां करोति — **तथाहीति** ।। स्वतन्त्राऽस्वतन्त्रभेदेन तत्वद्वैविध्य-मनङ्गीकुर्वाणः प्रष्टव्यः, तदनङ्गीकारः किं सर्वशून्यवादिरीत्या, तत्त्वस्यैवाभावाद्वा, तत्सद्भावेऽपि विज्ञानवादमायावादरीत्या, तस्यानेकत्वाभावाद्वा, अनेकत्वेऽपि स्वातन्त्र्येण पारतन्त्र्येण वा ऐकविध्येन द्वैविध्यासंभवाद्वा, प्रकारान्तरेण द्वैविध्यसम्भवाद्वा; त्रैविध्यादिसम्भवाद्वेति ।। तत्राद्यं दूषयति — **यदि तत्त्व-मेवेति** ।। **प्रत्यक्षादीति** ।। सन् घट इत्यादिप्रत्यक्षविरोध इत्यर्थः ।।

1. प्रत्यक्षस्य, इन्द्रियार्थसन्निकर्षस्यैव अजननात्, विरोधस्स्यादित्यत्र हेतुरयम् ।
2. [illegible] । 3. प्रत्यक्षादीति–जायमानप्रत्यक्षे-

**भ्रान्तिरस्ति । नापि निरवधिको बाधः । नास्त्येव तत्वमित्यस्यार्थस्य प्रमितत्वाऽप्रमितत्वयोर्व्याघातश्च । यदि चैकमेव तत्त्वं, तदा भेदोपलम्भविरोधः । तद्भ्रान्तितायां च बाधकं वाच्यम् । तच्चान्यत्र**

श्री विजयीन्द्रतीर्थाः ॥

**न च निरधिष्ठानेति ॥** ननु — निरधिष्ठानभ्रान्तिमभ्युपगच्छता तत्र भ्रान्तित्वं [1]केनचित् अवसेयम् ? उत न ? । आद्ये अधिष्ठानज्ञानस्यैव भ्रमत्वज्ञानहेतुतापत्तौ भ्रान्तेर्निरधिष्ठानत्वं[2] भज्येत । द्वितीये भ्रान्तितत्वबोधकप्रमाणाभावेन प्रमात्वमेवाङ्गीकृतं स्यादित्याशयः ॥ नन्वप्रमात्वं बाधादेव सिद्ध्यतीति चेत् तत्राह — **नापि निरवधिक इति ॥** बाधमप्रमात्वसाधकं वदन् प्रष्टव्यः — स किं निरवधिकः ? आहोस्वित्सावधिकः ? । आद्ये — प्रमाणाभावः । सति प्रमाणे च [3]तस्यैव [4]तत्त्वताप्रसङ्गात् । द्वितीये — स बाधः किं भवन्मात्रसिद्धः ? उत प्रमाणसिद्धः ? । आद्ये — तस्य उत्तरानर्हत्वात् । द्वितीये — न हि घटादितत्वविषयकः [5]तथाविधो बाधो दृश्यत इति भावः ॥ **नास्त्येवेति ॥** [6]तत्वाभावस्य प्रमितत्वे तस्यैव तत्वतापत्तौ तदभावावगाहिनोऽप्रमाणत्वेन

श्री वेङ्कटभट्टाः ॥

**बाधकाभावादिति ॥** [7]प्रमाणान्तरस्य प्रत्यक्षमूलत्वेन तद्बाधाक्षमत्वादिति भावः । भ्रान्तिबाधयोरङ्गीकारेऽपि तदन्यथानुपपत्त्या तत्वसिद्धिरित्याह — **न चेति ॥**

यत्र रूपान्तरारोपस्तदधिष्ठानमुच्यते ।
तद्विनैवेत्थमित्येवं नारोपः क्वचिदीक्षितः ॥ इति भावः ॥

**नापीति ॥** रूपान्तरप्रसक्तौ हि सोऽवधिर्यत्र बाध्यते ।
तं विना नेत्थमित्येव न क्वचिद्बाध ईक्ष्यते ॥ इति भावः ॥

**प्रमितत्वाप्रमितत्वयोरिति ॥** यदि प्रमितं तर्हि प्रमितिविषयस्यैव तत्त्वताभ्युपगमेन तत्त्वताऽस्तित्वस्यैव तत्त्वतासिद्धेः, यद्यप्रमितं तद्विपर्ययस्य

निरस्तम् ॥ यदि वा सर्वमेव स्वतन्त्रं स्यात्, तदा पारतन्त्र्यादिप्रतीतिविरोधः । नित्यसुखादिप्रसङ्गश्च ॥ यदि वा परतन्त्रमेव तत्त्वं भवेत्, तदाऽनवस्थितेरसम्भवाच्च न कस्यापि सत्तादिकं स्यात् । आगमविरोधश्च ॥

---

श्री विजयीन्द्रतीर्थाः ॥

[1]ततोऽर्थसिद्धिविरोधः; प्रमाणस्यैवार्थसाधकत्वनियमात् । प्रतियोगिनस्तत्वस्य प्रामाणिकत्वात् तदभावबोधकस्य प्रमाणविरोधो व्याघात इत्यर्थः । द्वितीयं निरस्यति — **यदि चैकमेवेति** ॥ भेदोपलम्भः = भेदप्रमितिः। **तच्चान्यत्वेति** ॥ भेदोपलम्भस्य प्रमात्वे तद्विषयेण तत्वेनावश्यं भाव्यम् । तदप्रमात्वे बाधकं वाच्यम् । तच्च न, प्रत्युत प्रमाण एव विचित्रव्यवहारानुभवयोरबाधितयोस्सत्वादिति निरस्तमित्यर्थः । तृतीयं दूषयति — **यदि चेति** ॥ **नित्यसुखादीति** ॥ आदिपदात् ईश्वरैकनियतधर्मपरिग्रहः ॥ **प्रसङ्गश्च** ॥ घटो यदि स्वतन्त्रस्स्यात् नित्यं सुखी स्यात्, नित्यज्ञानवान् स्यात, ईश्वरवत् इत्येवमादिः । न चाप्रयोजकता, स्वातन्त्र्यस्य नित्यसुखादिव्याप्तत्वावधारणादिति

---

श्री वेङ्कटभट्टाः ॥

बाधावश्यम्भावात् तत्वास्तिताया एव सिद्धेर्व्याघात इति भावः । द्वितीयं निरस्यति — **यदि चैकमेवेति** ॥ **तद्भ्रान्तितायामिति** ॥ तद्भ्रान्तितायामङ्गीकृतायामप्रमात्वे बाधकं वाच्यमित्यर्थः ॥ **तच्चेति** ॥

सापेक्षत्वात्सावधेश्च तत्वाद्वैतप्रसङ्गतः ।
एकाभावान्न सन्देहान्न रूपं वस्तुनो भिदा ॥

इत्यादिबाधकं तु विष्णुतत्त्वनिर्णयादौ निरस्तमित्यर्थः । तृतीयं निराचष्टे — **यदि वा सर्वमिति** ॥ **नित्यसुखादीति** ॥

"यदि नाम न तस्य वशे सकलं,
कथमेव तु नित्यसुखं न भवेत्"

इत्युक्तेरिति भावः ॥ न चाचेतनस्य कथं नित्यसुखादिप्रसङ्ग इति वाच्यम् ।

---

1. तत्वाभावरूपार्थसिद्धिर्न स्यादित्यर्थः ।

यद्यपि भावाभावतया वा चेतनाचेतनत्वेन वा नित्यानित्यतया वाऽस्य द्वैविध्यं शक्यते वक्तुम् । तथाप्यस्य वैयर्थ्यात् अयमेव विभागो न्याय्यः । परतन्त्रप्रमेयं स्वतन्त्रप्रमेयायत्ततया विदितं हि निःश्रेयसाय भवति । तथा च प्रकरणान्ते वक्ष्य[1]ति ।

1. वक्ष्यति = 'बन्धो मोक्ष' ...... इत्यन्तिमकारिकायामिति भावः ।

---

श्री विजयीन्द्रतीर्थाः ॥

भावः । तुरीयं निरस्यति — **यदि वा परतन्त्रमेवेति** ॥ **अनवस्थितेरिति** ॥ सर्वस्य पारतन्त्र्ये [1]परस्यापि परतन्त्रत्वं, एवमन्यस्यापीत्यनवस्थितेरित्यर्थः । **असम्भवाच्चेति** ॥ कस्यापि पारतन्त्र्यं न स्यादित्यर्थः । पारतन्त्र्यं हि परप्रेर्यमाणत्वम् । परश्च व्यापारवान् परं प्रेरयेत् । तमपि कश्चिद्व्यापारवान् अपर — इति मूलभूतव्यापारासिद्धौ सर्वव्यापारासम्भवेन तद्घटितपारतन्त्र्याऽसम्भवादिति । किमतो यद्येवमत आह — **न कस्यापीति** ॥ स्वातन्त्र्याभावे जगन्नोत्पद्येत, न प्रतीयेत, न प्रवर्तेतेत्यर्थः । **आगमविरोधश्चेति** । स्वतन्त्रेश्वरप्रतिपादकागमविरोध इत्यर्थः ॥

ननु प्रकारान्तरेण द्वैविध्यसत्त्वात् स्वातन्त्र्यपारतन्त्र्याभ्यामेव द्वैविध्योपवर्णने किं विनिगमकमित्याशङ्क्य स्वातन्त्र्यपारतन्त्र्याभ्यामेव तत्त्वज्ञानं [2]निश्श्रेयससाधनमिति परिहारमाह — **द्विविधं तत्त्वमित्यन्तेन** ॥

---

श्री वेङ्कटभट्टाः ॥

अचेतनस्य स्वातन्त्र्यायोगेन सर्वस्यापि स्वतन्त्रत्वेऽचेतने चेतनत्वस्यापाद्यमानत्वादिति भावेन[3]आदिशब्दप्रयोगः । [4]यदि सर्वं तत्वं परं — परतन्त्रमेव स्यात्, तदा 'ऽनवस्थितेरसंभवाच्चे' त्यन्तरा[5]धिकरणीयसूत्रखण्डोक्तन्यायेन परतन्त्रस्य प्रवर्तकत्वे तस्यापि परतन्त्रान्तरप्रवर्तकमित्यनवस्थितेः, पूर्वपूर्वचेष्टासिद्धौ उत्तरोत्तरचेष्टाऽसिद्धिरिति मूलक्षतेः । परतन्त्रस्य प्रवर्त्येन सह परतन्त्रत्वसाम्ये

1. परमात्मनोऽपि । 2. मोक्षाय । मूले—वैयर्थ्यात् = निष्प्रयोजनत्वात् । अयमेव = आचार्योक्त एव । 3. सुखादीत्यादिपदप्रयोगः । 4. उत्तरवाक्यमवतारयति—यदीत्यादिना । 5. ब्रह्म-सू ( १-२-१७ ) ।

**अन्यथा गङ्गावालुकापरिगणनवत् इदं तत्त्वसङ्ख्यानम[1]पार्थकं स्यात् । अतः स्वतन्त्रास्वतन्त्रभेदात् द्विविधं तत्त्वमिति स्वतन्त्रतत्त्वस्य प्राधान्यात् तदेवादावुद्दिष्टम्; उद्देशेनैव लक्षणं लब्धमिति ॥**

1. अपार्थकं = अपगतोऽविद्यमानोऽर्थः यस्य तत् = निष्प्रयोजनम् ।

---

श्री विजयीन्द्रतीर्थाः ॥

**प्राधान्यादिति ॥** निश्श्रेयसोपयोगिज्ञानविशेष्यत्वादित्यर्थः उद्देशस्य लक्षणाद्यर्थत्वात्तदनुक्तौ न्यूनतेत्याशङ्क्याह — **उद्देशेनैवेति ॥** इष्यत इत्यनेन सूचिता परीक्षा चशब्दार्थः ॥ **तत एवेति ॥** प्राधान्यादे-

---

श्री वेङ्कटभट्टाः ॥

प्रवर्तनाऽसम्भवाच्च न कस्यापि प्रवृत्तिस्स्यादित्याह — **यदि वा परतन्त्रमेवेति॥ आगमविरोधश्चेति ॥** "आनीद[1]वातं स्वधया तदेकम्" "[2]नाहं कञ्चिदुपाश्रितः" इत्यागमविरोधस्स्यादित्यर्थः । चतुर्थं निराचष्टे — **यद्यपीति ॥** वैयर्थ्यमेवोपपादयति — **परतन्त्रप्रमेयमिति ॥ वक्ष्यतीति ॥** यद्यप्येतत्प्रकरणान्ते सृष्ट्यादिविषये इदं परतन्त्रं विष्ण्वायत्तमित्येवोच्यते[3], न तु तथा ज्ञातस्य निश्श्रेयसहेतुत्वम्, तथाप्येतत्प्रकरणोक्तार्थे [4]साक्षित्वेन [5]भगवत्प्रणीततत्त्वविवेकगतवाक्योदाहरणरूपतया [6]तत्त्वविवेकस्य [7]एतत्प्रकरणशेषत्वात् तदन्ते —

य एतत्परतन्त्रं तु सर्वमेव हरेस्सदा ।
वशमित्येव जानाति संसारान्मुच्यते हि सः ॥

इत्युक्तत्वादियमुक्तिरिति बोध्यम् ॥ [8]वैयर्थ्यादेव नामरूपकर्मभेदाद्विना त्रैविध्यादिसम्भवादिति चतुर्थोऽपि निरस्त इति भावेनोपसंहरति — **अत इति ॥**

---

1. ऋक्संहिता (म. १० - सू. १२९ - मन्त्र)
2. रुद्रं समाश्रिता देवाः रुद्रो ब्रह्माणमाश्रितः ।
   ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः ॥

अत (तत) एवादौ तन्निर्दिशति—स्वतन्त्र इति ॥ "स्वतन्त्रो भगवान् विष्णुः" अत्र भगवानिति विष्णोः स्वातन्त्र्योपपादकम् । अन्यदस्वतन्त्रमिति शेषः । अथवा द्वे तत्वे इत्युक्ते स्वतन्त्रमिव परतन्त्रमेका व्यक्तिरेव प्रसज्येत । तथाच प्रमाणविरोधो वक्ष्यमाण

श्री विजयीन्द्रतीर्थाः ॥

वेत्यर्थः । ननु किं स्वतन्त्रमिति धर्मिजिज्ञासायां विष्णुरिति वक्तव्ये [1]भगवत्तया तन्निर्देशानर्थक्यमित्यत आह— **अत्र भगवानितीति** ॥ **अत्रान्यद-** स्वतन्त्रमिति शेषस्याभिमतत्वात् किमस्वतन्त्रमिति जिज्ञासाऽशान्तिरित्याह — **अन्यदस्वतन्त्रमिति शेष इति** ॥ न चेतरदित्यनेनास्वतन्त्रनिर्देशात्तत **एव** जिज्ञासाशान्तिरिति वाच्यम्, तस्य विभागपरत्वेनान्याविरुद्धतया एतादृशाकाङ्क्षाऽनिवर्तकत्वादिति भावः ।

ननु प्रथमं इतिशब्दाध्याहारं विनैव तत्त्वं स्वतन्त्रमस्वतन्त्रमिति अभिधानेनैव द्वैविध्यलाभे द्विविधमित्यनर्थकम् । अन्यदस्वतन्त्रमिति शेषदानं चाधिकमित्यस्वरसात् कल्पान्तरमाह— **अथवेति** ॥ **प्रसज्येतेति** ॥ तत्त्वं स्वतन्त्रमस्वतन्त्रं चेति [2]चशब्दबलात् स्वतन्त्रास्वतन्त्ररूपे **द्वे** तत्त्वे इति

श्री वेङ्कटभट्टाः ॥

ननु — उत्तरकारिकायां स्वतन्त्रतत्वस्यैवादौ शृङ्गग्राहिकया निर्देशः कुतः । न च लक्षितत्वादादौ निर्देश इति युक्तम्, लक्षणोक्तेरेवानुपलब्धेः । आदौ तत्वलक्षणोक्तौ बीजाभावाच्चेत्यत आह— **स्वतन्त्रतत्त्वस्यैवेति** ॥ **उद्देशेनैवेति** ॥ आदाविति शेषः । यथा संज्ञानिरुक्त्यैव लक्षणलाभः, तथा उक्तमिति भावः ॥ **तत एवेति** ॥ प्राधान्यादुद्दिष्टस्यादौ लक्षितत्वात्, तदेवादौ निर्दिशति. अप्राधान्यादुद्दिष्टमनन्तरं लक्षितमस्वतन्त्रमर्थान्निर्दिशतीत्यर्थः । अत एव [3]वक्ष्यति — **अन्यदस्वतन्त्रमिति शेष** इति ॥ **अन्यद्विष्णोः** । **अत्रेति** ॥ तत्वविवेके निर्दोषाखिलसद्गुणत्वस्य स्वातन्त्र्योपपादकस्य [4]सत्त्वात 'भगवान्'

1. तत्तदवतितपाञ्चगुणविशिष्टतयेत्यर्थः । 2. समुच्चयार्थकचशब्दसामर्थ्यात् । स च स्वसमभिव्याहृतपदार्थस्य स्वघटितवाक्यघटकपदान्तरार्थसाहित्यं बोधयन् वाक्यबोधितपदार्थेषु द्वित्वादिकं बोधयति । तस्य च विशेषकारणाभावे व्यक्ताव्वेवान्वय इति तात्पर्यम् । 3. टीकाकृदत्र कर्ता । 4. निर्दोषाशेषेत्यादिविशेषणसत्त्वादित्यर्थः ।

विभागविरोधश्च । अतो द्विविधमित्युक्तम् । ततश्च स्वतन्त्रमप्यनेकं स्यादित्यत [1]इदमुक्तम् । अथवा स्वतन्त्रास्वतन्त्रभेदेन तत्त्वद्वैविध्यमङ्गीकुर्वाणा अपि साङ्ख्यादयः प्रधानादिकं स्वतन्त्रतत्त्वं प्रतिष्ठन्ते । तन्निरासायेदमुदितमिति ॥

1. इदमुक्तमिति । स्वतन्त्रो भगवानित्युक्तमित्यर्थः । एतदुक्तौ तु स्वतन्त्रान्तरस्य सत्वे प्रमाणाभावेन न तस्यानेकत्वप्रसङ्ग इति भावः ।

---

श्री विजयीन्द्रतीर्थाः ॥

प्राप्तौ द्वित्वस्यौत्सर्गिकव्यक्त्यन्वयबलात् स्वतन्त्रव्यक्तिवत् अस्वतन्त्रव्यक्तेरेकैव स्यादित्यर्थः । किमतो यद्येवमत आह — तथाचेति ॥ प्रमाणविरोधश्चेति ॥ अस्वतन्त्रव्यक्तिभेदस्यैव [1]प्रमीयमाणत्वादित्यर्थः । द्विविधमित्युक्तमिति ॥ [3]तथाच पूर्वोक्त[6]बाधात्[4] प्रकार एव द्वित्वान्वयो न व्यक्तावित्यर्थः । स्वतन्त्रो भगवान् विष्णुरित्येतदेवावतारयितुमाह — ततश्चेति ॥ व्यक्तौ द्विधान्वयाभावे अस्वतन्त्रव्यक्तिवत् स्वतन्त्रव्यक्तिरप्यनेका प्रसज्येतेत्यर्थः ॥ स्वतन्त्रो भगवान्

---

श्री वेङ्कटभट्टाः ॥

इत्येतत्पूजार्थमिति व्याख्यातम् । अत्र पुनः स्वातन्त्र्योपपादकस्यान्यस्याभावात् तदुपपादकमेव तदिति भावः । मा भूदन्यदस्वतन्त्रमित्यध्याहार इति भावेन प्रकारान्तरेण व्याचष्टे — अथवा द्वे तत्वे इत्यादिना ॥ परतन्त्रमिति ॥ स्वतन्त्रमिवास्वतन्त्रमपीत्यर्थः ॥ प्रसज्येतेति ॥ द्वित्वस्य प्रायेण स्वाश्रययोः [5]व्यक्त्यैक्य एव [6]प्रयोगादिति भावः ॥ अतो द्विविधमित्युक्तमिति ॥ प्रकारद्वित्वेन प्रकारिद्वित्वासिद्धावपि प्रकारद्वित्वेनावश्यं प्रकारिद्वित्वसिद्धेः । अनुक्त्वैव प्रकारिद्वित्वं प्रकारद्वित्वोक्तिः प्रकार्यवान्तरभेदसद्भावसूचनार्थत्वात्, तत्सूचनार्थं द्विविधमित्युक्तमिति भावः ॥ स्वतन्त्रमपीति ॥ अस्वतन्त्रमिव

---

1. प्रत्यक्षादिप्रमाणेत्यर्थः । 2. प्रत्यक्षादिना ज्ञायमानत्वे चेत्यर्थः । 3. स्वतन्त्रैकत्वाऽस्वतन्त्रानेकत्वग्राहकप्रमाणबाधादित्यर्थः । 4. प्रकार एव = विधाशब्दार्थप्रकार एव । समासघटकस्वोत्तरपदार्थान्वयस्यैव स्वाभाविकत्वादिति भावः । 5. द्वित्वाश्रयव्यक्तेरेकत्व एव, न त्वनेकत्वे इत्यर्थः । ततश्च स्वतन्त्रमेकं परतन्त्रमेकमित्येव स्यादिति भावः । 6. द्विशब्दप्रयोगादित्यर्थः ।

द्विविधमित्युक्त्या परतन्त्रतत्त्वमवान्तरभेदवदिति सूचितम्, तत्कथं? तत्राह — भावेति ॥ "भावाभावौ द्विधेतरत्" ॥ इतरत्, स्वतन्त्रात्। अस्वतन्त्रतत्त्वं द्विधा। कथम्? भावोऽभावश्चेति ॥

श्री विजयीन्द्रतीर्थाः ॥

विष्णुरित्युक्तौ बीजान्तरमाह — अथवेति ॥ पूर्वोक्तस्य स्वातन्त्र्यस्य स्वप्रमित्यादौ परापेक्षत्वेन बाधितत्वात्, अन्यादृशस्य चासदनभिमतत्वादिति भावः। द्विविधमित्युक्त्येति ॥ व्यक्तावौत्सर्गिकद्वित्वान्वयस्य [1]विधागतत्वाभिधानेनेत्यर्थः। इतरदित्यस्य भिन्नार्थकत्वेन भेदप्रतियोगिनमाह — स्वतन्त्रादिति। भावाभाववितरदित्युक्ते [2]प्रत्ययोपस्थापित द्वित्वस्य प्रकृत्यर्थभूत[3]व्यक्तावन्वयस्य

श्री वेङ्कटभट्टाः ॥

स्वतन्त्रमपीत्यर्थः। इदमुक्तमिति ॥ स्वतन्त्रो भगवान् [4]विष्णुरेक एवेत्युक्तमित्यर्थः।

एतेनास्वतन्त्रमिव स्वतन्त्रमप्यवान्तरभेदवदिति द्विविधमित्यनेनोक्त्वा[5] 'स्वतन्त्रो भगवान् विष्णु' रित्यनेन स्वतन्त्रव्यक्तेरेकत्वोक्तौ[6] स्ववचनव्याहतिरित्यपास्तम्। भावानवबोधात्। न हि प्रकारद्वैविध्योक्तिः प्रकारिण्यप्यवान्तरभेदस्य वाचिका, येन 'द्विविध' मित्युक्त्या स्वतन्त्रस्याप्यवान्तरभेदो वचनवृत्त्योक्तः स्यात्। नापि प्रकारद्वैविध्योक्तिः प्रकारप्रकारिणोः अवान्तरभेदस्य व्याप्यम्। येन द्विविधमित्युक्त्या स्वतन्त्रस्याप्यवान्तरभेदोऽप्यर्थादुक्तस्स्यात्। किन्तु आश्रययोर्व्यक्त्यैक्यप्रापकप्रकारिद्वित्वमनुक्त्वा 'द्विविधमि'ति प्रकारद्वित्वोक्तिः प्रकार्यवान्तरभेदस्य सूचिकैव, सा चापवादाभावे प्रकारिणोऽशेषस्यावान्तरभेदं सूचयति — यथा 'भावाभावौ द्विधेतर' दित्यादौ। सति त्वपवादे अपवादविषयातिरिक्तेऽवान्तरभेदसूचनेनाप्युपपन्ना, नापवादविषये अवान्तरभेदं सूचयति। यथा 'दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतन' मित्यादौ। तथा च कुतः स्वोक्तिविरोध इत्यादि।

---

1. विधापदार्थप्रकारगतेत्यर्थः। 2. औप्रत्ययोपस्थापितेत्यर्थः। 3. भावाभावपदार्थे। 4. इदं कण्ठतो नोक्तं, भगवत्त्वविशेषणादुक्तप्रायम्। निरवधिकैश्वर्यादिमतोऽन्यस्याभावादिति ज्ञेयम्। 5. द्विविधपदबोधितप्रकारानेकत्वस्य शब्दतः प्रतीयमानत्वेन प्रकारभेद उक्त इति शङ्कितुराशयः। 6. एकत्वेति। भगवानिति विशेषणसामर्थ्यादेकत्वलाभोक्तौ।

अभावप्रतीतिर्भावप्रतीत्यधीना नियमेनेति प्रागुक्तमिति प्रथमं भावस्यो-
द्देशः । प्रथमप्रतीतावस्तीत्युपलभ्यते यः स भावः । यश्च प्रथ-
मोपलब्धौ नास्तीति प्रतीयते सोऽभावः । कुत एतत् ? स्वरूपेण हि

श्री विजयीन्द्रतीर्थाः ॥

औत्सर्गिकस्य बाधात् योजनाप्रकारमाह— अस्वतन्त्रमित्यादि ॥ प्रथमं विभाग्यं द्वित्वान्वयाभिधानेन भावाभावावित्यत्रापि [1]सामानाधिकरण्यात् प्रकार एव द्वित्वान्वये तात्पर्यादिति भावः । अभावप्रतीतिरिति ॥ अभावत्वप्रकारकप्रतीतेर्भावज्ञानप्रयोज्यत्वनियमादित्यर्थः । उद्देशक्रमात् क्रमेण भावाभावयो-

श्री वेङ्कटभट्टाः ॥

न चैवं 'द्विविधमित्युक्त्या स्वतन्त्रपरतन्त्रयोरवान्तरभेदोऽस्तीति सूचितम् । तत्र स्वतन्त्रप्रमेयमेकमेवेत्युक्तमिति तत्वविवेकटीकोक्तिः कथमिति वाच्यम्— तस्यापि स्वतन्त्रपरतन्त्रयोर्मध्ये अवान्तरभेदोऽस्तीति सूचितमित्येवं व्याख्येयत्वात् । अत एवात्र [2]वक्ष्यति — 'द्विविधमित्युक्त्या परतन्त्रस्यावान्तरभेदवदिति सूचित'मित्यवधेयम् ॥ तन्निरासायेति ॥

"न च कर्मविमामलकालगुणप्रभृतीशमचित्तनु तद्धि यतः" इत्युक्तरीत्या प्रधानादिस्वातन्त्र्यनिरासाय 'स्वतन्त्रो भगवान् विष्णुरेक एवेत्युक्त' मित्यर्थः । मूले इतिशब्दोऽध्याहार्य इति भावेनाह — अभावश्चेतीति ॥ ननु अभावविलक्षणत्वादिना भावप्रतीतिरपि अभावप्रतीत्यधीनेत्यत आह — [3]नियमेनेति ॥ न च प्रागभावप्रध्वंसप्रतीतेः प्रतियोगिरूपभावप्रतीत्यधीनत्वेऽपि अत्यन्तासत्प्रतियोगिकात्यन्ताभावस्य प्रतीतिः कथं भावप्रतीत्यधीनेति वाच्यम् । तत्राप्यप्रसक्तस्य प्रतिषेधायोगेन प्रसक्तेश्च भ्रान्तिरूपतया अधिष्ठानज्ञानरूपभावप्रतीत्यधीनत्वादिति भावः ।

ननु किं प्रतीतौ प्रथमं योऽस्तीत्येवं प्रथमग्रहणं कालविशेषणमभिप्रेतम् ? किं प्रथमा या प्रतीतिरिति प्रतीतिविशेषणम् ? नाद्यः — बुद्धेर्विरम्यव्यापारा-

1. द्विविधद्विधेत्यनयोरेकार्थकत्वात् । 2. उत्तरत्र टीकाकारः । 3. अभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वाऽव्यभिचारेण तथैव सर्वेषामानुभविकत्वेनेत्यर्थः ।

भावाऽभावौ विधिनिषेधात्मानौ, रूपान्तरेणतु निषेधविधिरूपौ। तत्र आपातज्ञायां संविदि स्वरूपमेव भासते। द्वितीयादिप्रतीतौ

श्री विजयीन्द्रतीर्थाः ॥

विभाजकं पाधिमाह — प्रथमेत्यादि ॥ सत्तावद्विशेष्यकप्राथमिकप्रतीतिविषयत्वं भावत्वम्। सत्ताभाववद्विशेष्यकप्राथमिकप्रतीतिविषयत्वं अभावत्वमित्यर्थः ॥

न च सत्तादौ सत्ताया अभावेन भावाभावविभाजकोपाध्योरव्याप्तिरिति वाच्यम्। सत्तादावप्येकार्थ [1]सामानाधिकरण्येन सत्ताया विद्यमानत्वात्, अभावे तु सत्ताभावेऽपि अभेदेन सम्बन्धेन सत्ताभावसत्त्वात्। उभयत्र च

श्री वेङ्कटभट्टाः ॥

भावात्। द्वितीयेऽपि — किमिह जन्मनि स्वविषयिका या प्रथमप्रतीतिः सा विवक्षिता? किं वा एकसामग्रीजन्यासु स्वविषयिकासु या स्वविषयिका या प्रथमप्रतीतिः सा? अथवा — यदा यदा स्वयं जायते तदा तदा स्वविषयकं ज्ञानद्वयमस्ति, आपातजं विमर्शजं च। तत्रापातजा या संवित् सा?। नाद्यः — गिरिदरीविवर्वर्तिनो गजाभावस्य अभावत्वज्ञानात्पूर्वमेव जातायां यत्प्रमेयं तदस्तीत्येतस्यां सामान्याकारेण प्रमेयमात्रविषयिकायां वन्यगजाभावस्य प्रथममस्तित्वेन प्रतीतेः भावाभावलक्षणयोरतिव्याप्त्यव्याप्तिप्रसङ्गात्। न द्वितीयः — एकसामग्र्या अनेकज्ञानजनकत्वायोगात्। सामग्रीभेदाभावे कार्यभेदस्याकस्मिकत्वप्रसङ्गात्। तृतीयेऽपि के इमे — अस्तिनास्तिप्रतीती? किमस्तिनास्तीति व्यवहारोत्पादिके? किं वाऽस्तिनास्तिपदार्थविषयिके? यद्वा अस्तित्वनास्तित्वप्रकारिके। नाद्यः — अव्याप्तेः। ज्ञानस्य व्यवहारजनकत्वनियमाभावेन विवक्षितस्य अस्तीत्यादिप्रतीतिविषयत्वस्याभावात्। उत्पन्नस्यापि ज्ञानस्य व्यवजिहीर्षाभावेन व्यवहाराजनकत्वात्। न द्वितीयः — भावाभावलक्षणयोरतिव्याप्त्यसम्भवापातात्। अभावस्यास्तित्वपदार्थत्वात्। अन्यथा कथं पश्चादपि घटाभावोऽस्तीति प्रतीतिः। तृतीयेऽपि — के इमे अस्तित्वनास्तित्वे? किं भावत्वाभावत्वे? सत्त्वनिषेधत्वे वा? आद्ये — अन्योऽन्याश्रयः, द्वितीयेऽनुगतसत्तानङ्गीकारेण स्वरूपसत्त्व-

1. एकस्मिन्नर्थे = द्रव्यादौ, सामानाधिकरण्येन गुणादिसामानाधिकरण्येन विद्यमानत्वादित्यर्थः। एवं च सत्तायामपि सत्ताऽस्त्येवेति ज्ञेयमिति भावः।

रूपान्तरम्। कार्यगम्यत्वात् सामग्रीभेदस्य। तथाच प्रतीतिः—अस्त्यत्र घटः, स न शुक्ल इति। एवं नास्त्यत्र घटः, अस्ति घटाभाव इति ॥

---

श्री विजयीन्द्रतीर्थाः ॥

प्रतीतौ प्राथम्यविशेषणात् न द्वितीयादिप्रतीतिमादाय परस्परातिव्याप्तिरिति द्रष्टव्यम्।

प्रथमेति विशेषणात्, अतिव्याप्तिनिरासं प्रश्नपूर्वकमुपपादयितुमाह—**कुत एतदित्यादि** ॥ नन्वेवं सामग्रीवैचित्र्यकल्पने किं मानमत आह—**कार्येति** ॥ कार्यवैचित्र्यानुपपत्तेरेव सामग्रीवैचित्र्ये मानत्वमित्यर्थः। कार्यवैचित्र्यमेवाह—**तथाचेति। न शुक्ल इतीति** ॥ शुक्लभेदस्य घटरूपत्वेऽपि शुक्लभिन्नतया ज्ञानं प्रतियोग्यादिज्ञानाभावा(दा)दौ न सम्भवतीति भावः।

---

श्री वेङ्कटभट्टाः ॥

निषेधत्वरूपे उभे अपि प्रत्येकं भावेऽभावे च विद्येते इति सिद्धान्तः। एवञ्च स्वरूपप्रतीतावेव प्रतीयते? उत न? आद्ये—स्वरूपसत्वस्य भाव इव अभावेऽपि प्रत्येतव्यत्वात्। निषेधत्वस्य चाभाव इव भावे प्रत्येतव्यत्वादतिव्याप्तिः। द्वितीये त्वव्याप्तिः, न हि भावे एव स्वरूपसत्त्वमेव प्रथमं प्रतीयते। अभाव एव निषेधत्वमेव प्रथमं प्रतीयत इत्यत्र नियामकमस्तीति भावेन शङ्कते—**कुत एतदिति** ॥ परिहरति—**स्वरूपेणेति** ॥ धर्मितयेत्यर्थः। **रूपान्तरेणेति** ॥ अभावाभावरूपधर्मवत्तयेत्यर्थः। **निषेधविधिरूपाविति** ॥ धर्मिधर्मैक्यवत इति भावः ॥ **स्वरूपमेवेति** ॥ तदा रूपान्तरप्रतीतिसामग्रीविरहादिति भावः ॥ **द्वितीयादिप्रतीताविति** ॥ तदा रूपान्तरप्रतीतिसामग्रीसमावेशादिति भावः।

ननु—आपातजायां संविदि रूपान्तरप्रतीतेः सामग्रीविरहः, द्वितीयादिप्रतीतौ तत्समावेशश्च कुत इत्यत आह—**कार्येति** ॥ कार्यमेव दर्शयति—**तथाचेति** ॥ भावविषयं प्रतीतिद्वयं क्रमेणोदाहरति ॥ **अस्त्यत्र चेति** ॥ अभावविषय प्रतीतिद्वयं क्रमेणोदाहरति **एवमिति** ॥ कार्यमेव क्रमेणोदाहरति—**एवमिति** ॥ ननु—[1] भावलक्षणे घटाभावोऽस्तीति वाक्यात्

---

... प्रतीयमानत्वं भावत्वमिति भावलक्षणेऽङ्गीक्रियमाणे।

## श्री विजयीन्द्रतीर्थाः

अस्त्यत्र घटाभाव इतीति ॥ न हीदं प्राथमिकं भवितुमर्हति, तस्य सत्तांशे भ्रमत्वेन आरोप्यसत्ताज्ञानविलम्बेन विलम्बादिति भावः ।

## श्री वेङ्कटभट्टाः ॥

प्रथममेवास्तीत्युपलभ्यमानेऽभावेऽति[1]व्याप्तिरिति वाच्यम् । तत्रापि घटाभाव इत्यवान्तरवाक्यार्थभूतप्रतिषेधाकारप्रतीत्युत्तरकालमेव तदस्तित्वप्रतीतेः । अत[2] एव घटो नास्तीति वाक्यात् प्रथममेव घटस्य नास्तित्वाकारेण प्रतीतेरभावलक्षणस्यातिव्याप्तिरिति परास्तम् ।

ननु[3] — अभावलक्षणे तथाप्यतिव्याप्तिः ॥ तथाहि — भेदो हि धर्मिस्वरूपमेव, स च धर्मिग्रहेण[4] न गृह्यत एव । उक्तं हि — "स्वरूपं वस्तुनो भेदो यत्र तस्य ग्रहे ग्रहः" इति । न च प्रथमोपलब्धौ सप्रतियोगिकप्रतिषेधाकारेण प्रतीयमानत्वं विवक्षितम्, तथाच स्वरूपाकारेण प्रतीतावपि नातिव्याप्तिरिति वाच्यम्; प्रथममेव सामान्यतस्सर्वविलक्षणत्वेन वस्तुप्रतीत्यङ्गीकारात् । उक्तं हि -- "प्रायस्सर्वतो विलक्षणं पदार्थस्वरूपं दृश्यत" इति । तथाच कथं नातिव्याप्तिरिति । मैवम् — विशेषतः प्रतिषेधाकारेण प्रथमं प्रतीयमानत्वस्य अभावलक्षणत्वेन विवक्षितत्वात् । स्वरूपेण भेदप्रतीतावपि प्रथमं विशेषाकारेण प्रतीत्यभावात् । अत एवानन्तरप्रतीतिः 'न शुक्ल' इति विशेषाकारेणैवोदाहृता ॥ उक्तं हि—

'को विरोधः स्वरूपेण गृहीतो भेद एव तु ।
अस्यामुष्मादिति पुनर्विशेषेणैव गृह्यते' ॥ इति ॥

ननु[5] — प्रतीत्यनुपाधिकाभावत्वाद्यभावे कुतोऽयं प्रतीतिविषय इति भावेनाप्याक्षिपति ॥ कुत एतदिति ॥ प्रतीत्यनुपाधिके अपि भावत्वाभावत्वे

---

1. भावलक्षणस्येति शेषः । 2. अवान्तरवाक्यकल्पनेन भावाभावयोः प्रथमप्रतीतिविषयत्वाङ्गीकारादेवेत्यर्थः । 3. अभावलक्षणस्य प्रकारान्तरेणातिव्याप्तिमाशङ्क्य परिहरति — नन्वित्यादिना, गृह्यत इत्यन्तेन । 4. न गृह्यते—भेदत्वेन रूपेण । भेदः वस्तुनः स्वरूपमेव, तस्य = अधिकरणस्वरूपभूतस्य भेदस्य, ग्रहे = धर्मिप्रतीतौ, न ग्रहः = स्वरूपेण प्रतीतिर्नास्तीत्यर्थः । अधिकरणस्य विधिरूपत्वेन तत्स्वरूपभूतभेदस्याविधिरूपत्वमिति । 5. प्रकारान्तरेण मूलं व्याख्याति — नन्वित्यादिना ।

**नतु — स्वतन्त्रतत्त्वं भावोऽभावोऽन्यद्वा। नाद्यद्वितीयौ, भावाभावयोः परतन्त्रभेदत्वात्। न तृतीयः, व्याघातात्। मैवम्। भावलक्षणाक्रान्तत्वात्। परतन्त्रं भावाऽभावतया द्विधैव, न पुनरेकविधम्, नापि त्रिविधमित्येवंपरो विभागः। न पुनः परतन्त्रमेव भावाऽभावात्मकमिति ॥**

---

श्री विजयीन्द्रतीर्थाः ॥

'भावाऽभावौ द्विधेतर'दित्यस्य भावत्वाऽभावत्वान्यतरत्वावच्छिन्ने अस्वतन्त्रत्वायोगव्यवच्छेदार्थकत्वं मन्वानः शङ्कते — **ननु स्वतन्त्रमिति** ॥

**परतन्त्रभेदत्वादिति** ॥ भगवतोऽपि परतन्त्रभेदत्वे 'स्वतन्त्रमस्वतन्त्रं चे'ति प्रथमविभागविरोध इति भावः। **व्याघातादिति** ॥ भावभिन्नस्य अभावतया भावभिन्नेष्वभावभिन्नत्वविरोधादित्यर्थः। अस्वतन्त्रे भावत्वाऽभावत्वाऽन्यतरायोगव्यवच्छेदार्थकत्वमभिप्रेत्य परिहरति— **मैवमिति** ॥ एतदेवोपपादयति — **परतन्त्रमित्यादिना** ॥

---

श्री वेङ्कटभट्टाः ॥

विद्येते — इति भावेन परिहरति— **स्वरूपेण हीति** ॥ व्याख्यानं पूर्ववत्। तथाच धर्मद्वारमन्तरेण धर्मिण एव विधित्वं भावत्वं, धर्मद्वारमन्तरेण धर्मिण एव निषेधत्वमभावत्वमित्यर्थः। उभयोरुक्तविधलक्षणत्वे किं प्रमाणमित्यत आह — **तत्राऽऽपातजायामिति** ॥ तथा च — उक्तयोर्भावाभावलक्षणयोर्न कश्चित्क्षुद्रोपद्रवः ॥ उक्तं हि —

...................... प्रथमप्रतिपत्तिषु।
निषेधविधिरूपत्वं भावाभावत्वमत्र हि ॥ इति ॥

तथाच— अभावस्य च धर्मास्स्युः भावास्तेषां [1]च ते[2]ऽखिलाः।
सर्वे भावा अभावाश्च पदार्थास्तेन सर्वदा ॥
धर्मधर्म्यैक्यतश्चैव न तु [3]तन्मात्रतः क्वचित्।

---

1. भावानान्तु। 2. ते=अभावाः। 3. तत्स्वरूपमात्रेण।

**यथा भावेषु स्वतन्त्रतत्त्वं प्रविशति, तथा** ...मिति चेत् — नैवं शङ्क्यम्, तद्धि प्रधानतया सर्ववि... ...व्यम्। अन्यथा — द्विविधं तत्त्वं, भावोऽभावश्च। ... नित्योऽनित्यश्च। नित्योऽपि द्विविधः, चेतनोऽचेतन... द्विविधः, स्वतन्त्रोऽस्वतन्त्रश्च इति कर्तव्यम्। एवं स... ...प्रतिपत्तिस्स्यात्। भगवद्व्यतिरिक्तस्य सर्वस्यापि अ... स्यात्। अस्मिन् पक्षे स्वतन्त्रस्य भावत्वं न विदितं ... ...चेति चेत् — न; पुरुषार्थोपयोगानुपयोगाभ्यां विशेषात्...

श्री विजयीन्द्रतीर्थाः ॥

ननु तत्त्वस्य भावाऽभावतया वाऽऽद्यो विभागः कुतो ... **यथा भावेष्विति ॥ एवं सतीति ॥** भावत्वाभावत्वाभ्यां ... इत्यर्थः। स्वातन्त्र्यास्वातन्त्र्याभ्यामेव विभागकरणे पूर्वोक्तयुक्ति... **भगवद्व्यतिरिक्तस्येति ॥** यद्यपि 'यद्यपी'त्यादिना ... विभागकरणं पूर्वमाशङ्कितम्। तथापि स्वतन्त्रायत्ततया परत... ...यसोपयोगीति वक्तुं पूर्वमाशङ्कितम्। इदानीं तु स्वतन्त्रस्य ... विविक्ततया ज्ञानं निश्श्रेयसोपयोगीति निवेदयितुमिति भेद इ...

श्री वेङ्कटभट्टाः ॥

तथापि प्रथमं बुद्धेर्यो निषेधस्य गोचरः
सोऽभावो विधिबुद्धेस्तु गोचरः प्रथमः

**परतन्त्रेति ॥** स्वतन्त्रतत्त्वस्याऽस्वतन्त्रतत्त्वावान्तरभेद... ...ऽनुपपत्तेश्च। तथा चान्यथाविवक्षितसंख्याया 'विभज्यमान... ...र्थकविभागविरोधादिति भावः। **व्याघातादिति ॥** न हि ... प्रतीतिर्नामाऽस्तीति भावः। विभागस्य विभज्यमाने विवक्षि... ...व्यवच्छेदार्थत्वमि'त्यतो विभागविरोध इत्याह — **परतन्त्रे...**

नित्यत्वाद्यनुक्तिश्च समैव । तस्मात् यथान्यासमेवास्तु ॥

अथ—अस्वतन्त्रं चेतनत्वादिनैव विभज्यताम्, किं चेतनत्वादिना विभज्य, भावाऽभावतया विभागः कर्तव्यः, उतायं न कर्तव्य एव । नाद्यः—(अविशेषात्) विशेषाभावात् । अभावस्याचेतनत्वं

श्री विजयीन्द्रतीर्थाः ॥

ननु प्राधान्येन इतरसर्वविविक्ततया च स्वतन्त्रज्ञानार्थतया विभागावश्यकत्वे भावतया न तज्ज्ञानं सिद्ध्येदिति "एकं सन्धित्सतोऽपरं प्रच्यवते" इत्याह—असिद्ध पक्ष इति ॥ तेन रूपेण तज्ज्ञानस्य पुरुषार्थानुपयोगित्वान्न तुल्यतेत्याह --नेति ॥ नित्याऽनित्यतया च तत्त्वविवेकस्य पुरुषार्थोपयोगित्वेऽपि तेन रूपेणाविवेकस्त्वत्पक्षेऽपि सम इत्याह--अभावादीनामिति॥ विभज्यमानानां नित्यानामित्यर्थः । उपसंहरति—तस्मादिति ॥

श्री वेङ्कटभट्टाः ॥

साक्षात्तत्त्वविभाजकोपाध्यवच्छिन्नत्वेनेत्यर्थः। हेतुरेव विविच्यते—अन्यथेति ॥ विनिगमनाविरहेण नित्यादितत्त्वेऽपि स्वतन्त्रतत्त्वस्य प्रवेशनीयत्वादिति भावः ॥ इति कर्तव्यमिति ॥ भावो द्विविधः—स्वतन्त्रोऽस्वतन्त्रश्च, अस्वतन्त्रोऽपि द्विविधः—चेतनोऽचेतनश्चेति; नित्योऽनित्यश्चेति वेत्येवं कृते, भावत्वे विदितेऽपि स्वतन्त्रतत्वस्य भावत्वे नित्यत्वे च विदितेऽपि, चेतनेषु नित्यानित्यप्रभेदाभावेन स्वतन्त्रास्वतन्त्रयोर्नित्यप्रभेदत्वानुपपत्त्या स्वतन्त्रतत्त्वस्य चेतनत्वं नित्यत्वं चाविदितं स्यात् । भावो द्विविधः —चेतनोऽचेतनश्चेत्येवं कृते, स्वतन्त्रतत्त्वस्य भावत्वे नित्यत्वे च विदितेऽपि, चेतनेषु नित्यानित्यप्रभेदाभावेन स्वतन्त्रास्वतन्त्रयोः नित्यप्रभेदत्वानुपपत्त्या स्वतन्त्रतत्वस्य नित्यत्वमविदितं स्यात् ॥ भावोऽपि द्विविधो नित्योऽनित्यश्चेत्येवं कृते, नित्येषु चेतनाचेतनत्वप्रभेदसद्भावेन स्वतन्त्रास्वतन्त्रयोः चेतनप्रभेदत्वोपपत्त्या चेतनत्वज्ञानसम्भवात् स्वतन्त्रतत्त्वस्य भावत्व-नित्यत्व-चेतनत्व-ज्ञापनार्थमेव विभागः कर्तव्य इति भावः॥ पुरुषार्थोपयोगेति ॥ भगवद्व्यतिरिक्तस्य सर्वस्य स्वतन्त्रप्रमेयाऽऽयत्ततया ज्ञानं यथा निश्श्रेयसहेतुत्वेनोपयोगि, न तथा स्वतन्त्रतत्त्वस्य भावत्वादिज्ञानमित्यर्थः ॥

एवं सति नोक्तं स्यादिति चेत् — तथा सति चेतनस्य भावत्वमपि नोक्तं स्यादिति समम् । तर्हि केन विशेषेणास्य प्राधान्यमिति चेत् — वादिविप्रतिपत्तिभावाभावाभ्यां विशेषात् । अत एव न द्वितीयोऽपीति ॥ अभाव एव नास्तीति केचित् । तदसत् । नास्तीति प्रतीतेर्दुरपह्नवत्वात् । घटो नास्तीति प्रतीतिर्भूतलमात्रविषयेति चेत् — मात्रेति किं भूतलमेवोच्यते? उतातिरिक्तं किञ्चित्? आद्ये घटवत्यपि प्रसङ्गः । अतिरिक्तोऽपि घटश्चेदुक्तो दोषः । भावान्तरं चेत् — रूपवति घटे गन्धो नास्तीति प्रतीतिप्रसङ्गः ।

---

श्री विजयीन्द्रतीर्थाः ॥

ननु भगवत्पादकृतविभागे विनिगमकं किमित्यभिप्रेत्य पृच्छति — **अथेति ॥ किं चेतनत्वादिनेति ॥** 'अस्वतन्त्रं चेतनमचेतनं चे'ति आदौ विभज्य, तदनन्तरं अचेतनं द्विविधं — भावोऽभावश्चेत्येवं विभज्यतामित्यर्थः ॥ **उतायमिति ॥** अचेतनं द्विविधं — भावोऽभावश्चेत्येवं रूपश्चरम इत्यर्थः । तदुक्तं — **विभाग इति ॥** किं विनिगमकमित्यभिप्रेत्य सिद्धान्तयति — **अविशेषादिति ॥** विशेषं शङ्कते — **अभावस्येति ॥ तथासतीति ॥** त्वदुक्तपौर्वापर्येण विभागे सतीत्यर्थः । अभिप्रायमुद्घाटयति — **वादीति ॥** भगवत्पादकृतपौर्वापर्यविभागे वादिविप्रतिपत्तिसद्भाव एव विशेष इत्यर्थः । **अत एवेति ॥** वादिविप्रतिपत्तिसद्भावादेवेत्यर्थः । तामेव विप्रतिपत्तिमाह — **अभाव एव नास्तीति केचिदिति ॥** अभावत्वेन व्यवह्रियमाणे भावभिन्नत्वं नास्तीत्यर्थः । यथाश्रुते सिद्ध्यसिद्धिभ्यां व्याघातादिति ॥ **दुरपह्नवत्वादिति ॥** तथाचेयमेव प्रतीतिरतिरिक्ता भावविषयकत्वं विना अनुपपद्यमाना

---

श्री वेङ्कटभट्टाः ॥

**सममेवेति ॥** असत्पक्षेऽभावस्यानित्यत्वेऽचेतनत्वाद्यनुक्तिः, स्वतन्त्रतत्त्वस्य नित्यत्वचेतनत्वाद्यनुक्तिः चेतनस्य नित्यत्वाद्यनुक्तिर्यथा प्राप्यते, तथा त्वत्पक्षे अभावस्य नित्यत्वाद्यनुक्तिः, नित्यस्य चेतनत्वाद्यनुक्तिः प्राप्यत इत्यर्थः ।

भावाभावतयोक्तं परतन्त्रविभागमाक्षिपति — **अथेति ॥** अस्वतन्त्रमित्यनन्तरं एवशब्दो योज्यः ॥ यद्वा प्रथममिति शेषः । तेन विकल्पाऽनवकाशः

ननु— घटाभावो घटाभाववति भूतले सम्बध्यते? उत घटवति? नाद्यः, आत्माश्रयादिदोषप्रसङ्गात्। न द्वितीयः, विरोधात्। अतो वक्तव्यं भूतलमात्र इति॥

तदेवास्तु नास्तीति प्रतीतिविषय इति चेन्न। प्रश्न एवायं विविच्यताम्। यद्यभावसम्बन्धात् प्राक् कीदृशं भूतलमिति। यदि वा सम्बन्धसमये कीदृशमिति। यद्वा यद्यभावात् इदं विविच्येत तदा कीदृशं नाम स्यादिति। आद्ये—स घट इत्येवोत्तरम्। द्वितीये—

---

**श्री विजयीन्द्रतीर्थाः**

अभावत्वेन व्यवह्रियमाणस्य भावभिन्नत्वे मानमिति भावः। अन्यथोपपत्तिमाह— **घटो नास्तीति प्रतीतिरिति॥ घटवत्यपीति॥** घटवत्त्वेन ज्ञायमानेऽधिकरणे घटाभावप्रतीतिप्रसङ्गादित्यर्थः। न च घटवत्त्वज्ञानमेव प्रतिबन्धकमिति वाच्यम्। अविरोधे पटज्ञानस्येव घटज्ञानस्यापि अप्रतिबन्धकत्वादिति भावः॥ **उक्तो दोष इति॥** भूतलातिरिक्तघटरूपत्वाङ्गीकारे घटवत्यपि प्रसङ्ग इत्युक्तदोष इत्यर्थः॥ **भावान्तरमिति॥** प्रतियोगिभिन्नमित्यर्थः। घटाभावस्योपलक्षणत्वे उक्तदोषतादवस्थ्यात्। विशेषणत्वपक्षे दोषमाह— **आत्माश्रयादीति॥** घटाभाववतीत्यत्र तेनैवाभावेन तद्वति वा? अभावान्तरेण वा? आद्ये—आत्माश्रयः। द्वितीये— अभावान्तरमपि स्वेनैव तद्वति वा अभावान्तरेण। आद्ये आत्माश्रयः एव। द्वितीये— किं प्रथमेन? उत अपरेण? आद्ये अन्योऽन्याश्रयः। द्वितीये परोऽपि प्रथमेन त इति चेत्— तदा चक्रकम्। चतुर्थादिना चेत्— तदाऽनवस्थेत्यर्थः॥ **विरोधादिति॥**

---

**श्री वेङ्कटभट्टाः॥**

इति ज्ञेयम्॥ **वादीति॥** यद्यपि चेतनाचेतनविभागेऽपि वादिविप्रतिपत्तिर्वक्ष्यते, तथापि भावाभावविभागे यथा बहवो विप्रतिपद्यन्ते, न तथा चेतनाचेतनविभागे इति भावः॥ **अत एवेति॥** वादिविप्रतिपत्तिसद्भावेन कर्तव्यत्वादेवेत्यर्थः। वादिविप्रतिपत्तिमेवोद्भावयति— **अभात्र एवेति॥ नास्तीति॥** घट इति शेषः।

घटभाववदिति । तृतीये — यदि विवेको वस्तुकृतः तदा अभावस्य नष्टत्वात् घटवदिति । यदि बुद्धिकृतः तदा बुद्धचैव घटप्रसक्तिमदिति । अन्यथा एवं भावप्रतिक्षेपोऽपि स्यादित्यास्तां विस्तरः ॥

द्विधेत्युक्त्या भावाऽभावयोरवान्तरभेदोऽस्तीति सूचितम् । तत्र भावनिरूपणात् अभावनिरूपणस्याल्पत्वात् सूचीकटाहन्यायेन पश्चादुद्दिष्टमप्यभावं आदौ विभागेनोद्दिशति — प्रागिति ॥

---

श्री विजयीन्द्रतीर्थाः ॥

घटाभावस्य घटाधिकरणाऽनधिकरणत्वादित्यर्थः ॥ **भूतलमात्र इति** ॥ घटवद्भिन्न इत्यर्थः। **तदेवाश्रित्येति**॥ न च घटवद्भूतलभिन्नभूतलरूपत्वाङ्गीकारेण अन्योन्याभावस्वीकारापत्तौ अपसिद्धान्त इति वाच्यम् । स्वरूपभेदस्य एवपदेन विवक्षितत्वादिति भावः । विवक्षितविवेकेन भूतलस्यैव व्यावृत्ततया जिज्ञासितत्वमभिप्रेत्य प्रश्नं विकल्पयति — अभावसम्बन्धादिति ॥ यदभावाद्विविच्येत= विभज्येत, अभावासम्बन्धं भवेदित्यर्थः ॥ **विवेक इति** ॥ असम्बन्ध इत्यर्थः । **वस्तुकृतः** =वस्तुनिष्ठः ॥ **बुद्धिकृतः** =सम्बन्धस्यासत्त्वेऽपि बुद्धिविषयीभूत इत्यर्थः । अभावसम्बन्धानन्तरं अभावसम्बन्धस्य ध्वंसरूपत्वमभिप्रेत्याह — **बुद्धयैवेति** ॥ **घटप्रसक्तिमदिति** ॥ घटभ्रमविषय इत्यर्थः ॥ **अन्यथेति** ॥ अधिकरणविशेषेणैवाधेयप्रतीत्युपपत्ताविव्यर्थः । तथाच उभयासत्त्वे प्रतीतेर्निरालम्बनत्वेन सर्वशून्यतापत्तिरिति दिक् ॥

---

श्री वेङ्कटभट्टाः ॥

नन्वाख्यातुमशक्यत्वेऽपि मात्रशब्दार्थः प्रत्याख्यातुं न शक्यः । अन्यथा अभावस्याधिकरणाभावः परमते प्रसज्येतेत्याशयेन पृच्छति — **ननु घटाभाव इति** ॥ **आत्माश्रयादीति** ॥ घटाभावस्यात्यन्ताङ्गीकारे अन्योन्याश्रयादिकमिति भावः । प्रतियोगितदधिकरणभिन्नमधिकरणं अभावप्रतीत्यालम्बनं, भेदश्च वस्तुस्वरूपमेव, न पदार्थान्तरमित्यावयोस्समानम् । प्रतियोगिमदधिकरणबुद्धिः परमते भिन्नाधिकरणे बुद्धिर्वा अवस्थाविशेषविशिष्टमधिकरणं वा तदालम्बनमिति चेन्न, इत्थं ... [illegible]

प्राक्प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।
चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः ॥ २ ॥

**प्राक्त्वेन प्रध्वंसत्वेन सदात्वेनोपलक्षितः** अभावस्त्रिविध इष्यते। **प्रामाणिकैरिति** शेषः ॥ **उत्तरैकावधिरभावः प्रागभावः** ।

---

श्री विजयीन्द्रतीर्थाः ॥

अभावाऽसमन्वयस्य भावाभावस्वरूपत्वमभिप्रेत्याह — **अवान्तरभेद इति** ॥ अन्यथा धर्मिण्येव द्वित्वमुपन्यस्येत इति भावः। उद्देशक्रमोल्लङ्घने बीजमाह — तत्रेति ॥ भावाभावयोर्मध्ये ।

त्रैविध्योपपादनाय उत्तरपदार्थस्य समस्यमानप्राक्पदार्थेऽन्वयमाह — **प्राक्त्वेनेत्यादिना** ॥ ननु प्राक्त्वादेः कालवृत्तिधर्मत्वेन अभाववृत्तित्वाभावात् कथं तेन रूपेण अभावविभाग इत्यत आह — **उपलक्षित इति** ॥ तथा च प्रागभावत्वं, जन्याभावत्वं, सदातनाभावत्वं च त्रयं विभजयतावच्छेदकमिति नोक्तदोष इति भावः । सर्वैरस्वीकारात् कथं स्वीकर्तव्यं स्यादित्यतः शेषेण वाक्यं पूरयति— **प्रामाणिकैरिति** ॥ तथा च अप्रामाणिकानङ्गीकारेऽपि न वस्तुहानिरिति भावः । **उत्तरैकावधिरिति** ॥ विनाश्यभाव इत्यर्थः ।

---

श्री वेङ्कटभट्टाः ॥

**प्राक्त्वेनेत्यादि** ॥ द्वन्द्वान्ते श्रूयमाणः त्वप्रत्ययः प्रत्येकमभिसम्बध्यते, तृतीया च इत्थम्भूतलक्षण इत्यर्थः ॥ **उत्तरैकावधिरिति** ॥ अत्र प्रध्वंस-सदाभावयोरतिव्याप्तिवारणायेदं विशेषणम् । भावरूपाऽनाद्यविद्यादावतिव्याप्तिवारणायाभावपदम् ।

ननु — उत्तरावधिमत्त्वेनैव प्रध्वंससदाभावयोरतिव्याप्तिवारणात् एकपदं व्यर्थम्। अथ घटादिरूपे प्रागभावप्रध्वंसे अतिव्याप्तिवारणाय एकपदम्। न चैवं घटादिरूपे प्रध्वंसप्रागभावेऽतिव्याप्तिरिति वाच्यम् । प्रमेयान्तरस्यैव प्रागभा-

प्रतियोग्युत्पत्तेः प्रागेवाऽभावोऽस्ति, उत्पन्ने तु तस्मिन्नास्तीति कृत्वा। पूर्वैकावधिरभावः प्रध्वंसाभावः। प्रतियोगिप्रध्वंसाऽनन्तरमेवाभावो न तु प्रागस्तीति। न चैवं प्रागभावप्रध्वंसः प्रध्वंसप्रागभावः इति प्रवाहौ प्रसज्येते। प्रतियोगिन एव प्रागभावप्रध्वंसत्वेन प्रध्वंसप्रागभावत्वेन चाङ्गीकृतत्वात्। तर्हि घटप्रध्वंसो नाम

श्री विजयीन्द्रतीर्थाः ।।

पूर्वैकावधिरिति ।। प्रागभावप्रतियोग्यभाव इत्यर्थः। एतदेवोपपादयति — प्रतियोगीति ।। प्रागभावप्रतियोगिकध्वंस-प्रध्वंसप्रतियोगिकप्रागभावौ प्रतियोग्यतिरिक्तौ मत्वा शङ्कते — न चैवमिति ।। प्रवाहाविति ।। प्रागभावप्रध्वंसस्यापि प्रागभावः, तस्यापि विनाश्यभावत्वेन अपरः प्रध्वंसः, तस्य च प्रागभावप्रतियोग्यभावत्वेन अपरः प्रागभावः इत्येकः। प्रध्वंसस्यापि प्रागभावप्रतियोग्यभावत्वेन तत्प्रागभावः, तस्यापि ध्वंसप्रतियोगित्वेन अपरो ध्वंसः, तस्य च प्रागभावप्रतियोगित्वेन अपरः प्रागभाव इत्यपरः प्रवाह इत्यर्थः। अन्वयव्यतिरेकाभ्यां प्रतियोगिनैव प्रागभावप्रध्वंस — प्रध्वंसप्रागभावप्रतीत्याद्युपपत्तौ न प्रतियोग्यतिरिक्तावित्यभिप्रेत्य समाधत्ते — प्रतियोगिन एवेति ।। घटप्रागभावेत्यर्थः। न चेष्टापत्तिः, उत्पन्नस्य घटस्य यथापूर्वं सामग्रीसत्त्वेन पुनरुत्पाद-

श्री वेङ्कटभट्टाः ।।

त्वस्य आवश्यकत्वे घटादिरूपे प्रागभावप्रध्वंसेऽतिव्याप्तिशङ्काविरहादिति। मैवम्— उत्तरपदस्य केवलार्थकैकपदसमभिव्याहृतस्य पूर्वावधिनिषेधमात्रपरत्वेन उत्तरैकावधिपदस्य पूर्वावधिरहितत्वे सति अवधिमत्त्वार्थकत्वात्। एवञ्च पूर्वावधिरहितत्वेन प्रध्वंसाभावेऽवधिमत्त्वेन सदाभावेऽभावपदेनाविवादो चातिव्याप्तिनिरासात्, नकस्यापि वैयर्थ्यमिति न कश्चित्क्षुद्रोपद्रवः ।।

लक्षणानुक्त्या न्यूनतां परिहर्तुं लक्षणमपि उद्देशेनैव प्रतियोगिप्रध्वंसानन्तरभावे सूचितमित्याह — प्रतियोग्युत्पत्तेरिति ।। तत्वविवेकटीकोक्तरीत्या

प्रागभावानिवृत्तेः निवृत्तावपि प्रागभावान्तरानुवृत्तेः इति चेत्

न; घटवत्तद्ध्वंसस्यापि तद्विरोधित्वात् । निरवधिकोऽभावः सदाऽभावः । सदा अभावोऽस्तीति कृत्वा । अथात्यन्ताभाव इति प्रसिद्धसंज्ञातिक्रमेण सदाऽभाव इति संज्ञान्तरकरणं किमर्थम् । लक्षणस्यापि

श्री विजयीन्द्रतीर्थाः ॥

प्रसङ्गादिति भावः । घटवदिति ॥ उपलक्षणं चैतत्, प्रागभावोन्मज्जनं न तावदुत्पत्तिः । कारणाभावात् । प्रागभावत्वव्याघातत्वाच्च । प्रागभावस्य प्रागभावाङ्गीकारेऽनवस्थानात् । नापि वर्तमानसमयसम्बन्धः । तत्सम्बन्धस्यातिरेके मानाभावात् । तदुभयरूपत्वाङ्गीकारे प्रागभावस्य नष्टत्वेनापादयितुमशक्यत्वादित्यपि द्रष्टव्यम् ॥ निरवधिक इति ॥ प्रागभावाप्रतियोगित्वे

श्री वेङ्कटभट्टाः ॥

अतिव्याप्तिवारणाय अभावपदं ज्ञेयम् ॥ पूर्वं कालावधिरिति ॥ उत्तरावधिरहितत्वे सत्यवधिमानित्यर्थः । प्रागभावेऽतिव्याप्तिवारणाय प्रतियोगिप्रध्वंसे सत्येवेति विग्रहमभिप्रेत्याह — प्रतियोगिप्रध्वंसानन्तरमिति ॥ अत्र प्रध्वंसो नाम भावरूपः कारकव्यापाराहितः प्रतियोगिवृत्तिविशेषधर्मो विवक्षितः । अत्रापि पूर्ववत्सत्यन्तम् । सदाभावेऽतिव्याप्तिवारणायावधिमत्त्वविशेषणम् । पुराणादावतिव्याप्तिवारणायाभावपदम् । अत्यन्ताभावे घटान्योन्याभावरूपे प्रध्वंसात्परतोऽपि विद्यमानेऽतिव्याप्तिमपाकर्तुमेवेत्युक्तमिति ज्ञेयम् ॥ न चैवमिति ॥ प्रागभावस्य प्रतियोग्युत्पत्तेः प्रागङ्गीकृतावित्यर्थः । प्रध्वंसाभावस्य प्रतियोगिप्रध्वंसानन्तरमेवाङ्गीकृतावित्यर्थः । प्रवाहात्विति ॥ प्रध्वंसानन्त्यं प्रागभावानन्त्यं चेत्यर्थः । प्रागभावोन्मज्जनेति ॥ वस्तुप्रागभावप्रध्वंसाऽनाधारकालस्य वस्त्वाधारत्वनियमादिति भावः । घटवदिति ॥ विरोध्यनाधारकाल एव वस्त्वाधारकालो लाघवादिति भावः । एतेन घटस्य प्रध्वंसप्रागभावत्वे स्वप्रागभावप्रध्वंसानाधारसमयस्य स्वसमयत्वनियमात् घटप्रागभावकाले घटप्रध्वंसापत्तिरिति परास्तम् । घटवत्तत्प्रागभावस्यापि घटप्रध्वंसविरोधित्वादिति ॥

ननु 'पूर्वापरसदात्वेने'ति तत्त्वविवेकोक्तसंज्ञां विहाय परप्रसिद्धिमनुसन्दधानेनाचार्येण यथा प्रावप्रध्वंसेति परप्रसिद्धसंज्ञा कृता, तथाऽत्यन्ताभाव

उद्देशेनैव सूचनार्थम् । यच्चान्यैरत्यन्ताभावस्वरूपमुक्तं — संसर्गप्रतियोगिकाभावोऽत्यन्ताभाव इति । यथा एतद्घटैतद्भूतलसंसर्गाभावः इति, तदपि निराकर्तुमेतत् । तस्य निरवधिकत्वाभावात् ।

---

श्री विजयीन्द्रतीर्थाः ॥

सति ध्वंसाप्रतियोगित्ववानित्यर्थः । सदेति ॥ कालत्रयानाधेयप्रतियोगित्वादिति भावः । लक्षणस्यापीति ॥ यद्यप्यत्यन्ताभाव इत्युद्देशेऽपि अत्यन्त अभाव इत्यर्थविवेके तात्पर्यतः सोऽर्थो लभ्यत एवेत्यविशेषः । तथाप्यविलम्बेन लक्षणोपस्थित्यर्थं तथोक्तमिति ध्येयम् ॥ यच्चान्यैरिति ॥ अत्राऽपि अत्रापि परमतनिराकरणं तथं द्देशेऽपि पूर्वोक्तगत्या लभ्यत एव । तथापि स्पष्टतया तल्लाभार्थं एतदुक्तमित्यवगन्तव्यम् ॥

श्री वेङ्कटभट्टाः ॥

इति परप्रसिद्धैव संज्ञा कार्या, तत्त्वविवेकोक्ता तु कथं कृतेत्याशयवान् पृच्छति — अत्यन्ताभाव इति ॥ अत्यन्ताभाव इति संज्ञाकरणे हि नोद्देशेनैव लक्षणं सूच्यते, [1]अत्यन्तपदस्य प्रतियोग्यन्वितत्वेन [2]निषेध्यस्यैव कालत्रयसम्बन्धायप्रतीतिः । 'सदाभाव' इति संज्ञाकरणे [3]हि अभावस्य कालत्रयसंबन्धः प्रतीयत इत्युद्देशेनैव लक्षणं सूच्यत इत्याह — लक्षणस्यापीति ॥ स्वरूपमुक्तमिति ॥ लक्षणमुक्त्वा उदाहृतमित्यर्थः । यथैतद्घटेति ॥ घटापसरणानन्तरं इह भूतले घटो नास्तीति प्रतीयमानाभाव इत्यर्थः । न चायं तद्घटप्रतियोगिक एव न संसर्गप्रतियोगिक इति वाच्यम्; विकल्पाऽसहत्वात् । न तावदयमेतद्घटान्योन्याभावः, तादात्म्यानुल्लेखात । न च तद्घटप्रागभावप्रध्वंसौ, प्रतियोगिसमानकालीनत्वात । नापि सदातनस्तदत्यन्ताभावः, प्रतियोगिसमानदेशत्वात् । पुनस्तत्र घटापनयनेऽपि तस्य सत्त्वेन प्रतीतिप्रसङ्गात । न हि तदा सोऽन्यत्र गतः, अमूर्तत्वात् । नापि विनष्टः, नित्यत्वात् । अथ सन्नपि तत्र [4]प्रत्यासत्ति-

1. तत्तत्कार्यस्येत्यर्थः, स च असन् शशविषाणादिरेव स्यात् । अतिशयितोऽन्तः अभावो यस्येति व्युत्पत्त्या इति भावः; तदाह — प्रतियोग्यन्वितत्वेनेति । तस्याभाव उच्यते, तत्र प्रतियोगिनि अन्वितत्वेनेत्यर्थः । 2. निषेधस्य=अभावस्य स्वरूपम । . सन्निकर्षाभावात ।

तर्ह्युदाहृतश्चतुर्थस्स्यादिति चेन्न । तस्यापि यथासंभवं प्राग-

---

**श्री विजयीन्द्रतीर्थाः**

**तस्येति** ॥ संसर्गप्रतियोगिकाभावस्य उत्पत्तिविनाशवत्त्वेन निरवधिकत्वाभावादित्यर्थः । **तर्हीति** ॥ सदातनाभावस्य तद्भिन्नत्वमित्यर्थः ॥ **यथासंभवमिति** ॥ संसर्गप्राक्कालीनस्य प्रागभावे संसर्गोत्तरकालीनस्य ध्वंसे चान्तर्भावादित्यर्थः ॥

नन्वेवमपि देशान्तरे घटप्रतियोगिकाभावश्चतुर्थः, स हि न प्रागभावः, प्रतियोग्यसमानाधिकरणत्वात् । नापि सदाभावः, प्रतियोग्यसमानकालीनत्वादिति चेत् — नैवम्; तस्य घटप्रतियोगिकत्वाभावात् । घटतदभावाधिकरणाभावप्रतियोगिकालिकसम्बन्धप्रतियोगिकत्वेन प्रतियोग्यसमानकालतया सदाभाव एवान्तर्भावादित्यत्र तात्पर्यादिति दिक् ॥

---

**श्री वेङ्कटभट्टाः ॥**

विरहान्न गृह्यते, प्रतियोगिप्रत्यासत्तिविरोधिप्रत्यासत्तिके प्रत्यासन्ने सति प्रतियोगिनि कथं गृह्यते । एवञ्च समयविशेषसंसर्गिणो घटस्यैव सदातनाभावोपपत्तौ न सांसर्गिकसदातनाभावकल्पनमिति चेत् — न; तथासति प्रागभावप्रध्वंसाभावयोरुच्छेदप्रसङ्गात् । पूर्वोत्तरसमयमात्रसंसर्गिणा तदत्यन्ताभावेनैव भविष्यति विनष्ट इति स्वप्रतीत्योरुपपत्तेः ॥

ननु सदातन एव पुनस्तद्धटापनयने अन्य एवोत्पन्नो गृह्यते, तथाचोत्पादविनाशशीलेन घटस्यैवाभावेनोपपत्तौ न संसर्गप्रतियोगिकतादृशाभावकल्पनमिति चेत् — न; परिगणिताभावत्रिकमध्यान्तर्गतेनैवोपपत्तौ तुरीयतादृशाभावकल्पने मानाभावात् । न चैवं — घटात्यन्ताभावः कचिदपि न सिद्ध्येदिति वाच्यम्, इष्टत्वात् । किञ्च "इह भूतलेऽयं घटो नास्तीति" प्रतीत्या संसर्गस्यैव प्रतियोगित्वेन प्रतीत्युल्लेखयोरभावात्संसर्गो निषिध्यत इति नाङ्गीक्रियते? घटस्य प्रतियोगित्वे प्रतीत्युल्लेखयोः सत्वाद्वा? नाद्यः — इह भूतले

चतुर्विध इति; तदुभयं निराकर्तुं इष्यते इत्युक्तम् । अन्योन्याभावो हि भेद एव । स च स्वरूपमेवेत्यन्यत्रोपपादितम् । कार्यकारणयोस्संसर्गस्य

श्री विजयीन्द्रतीर्थाः ॥

परोक्तविभागमनुवदति — एक इति ॥ ननु कथमनेन तन्निराकरणं लभ्यतामित्यत आह — अन्योऽन्याभावो हीति ॥ भेदाधिकरणत्वाभिमतेनैव

श्री वेङ्कटभट्टाः ॥

विशेषणा" न्यायेन संसर्गप्रतियोगित्वेन प्रतीत्युल्लेखयोर्भावात् । प्रतियोगित्वबाधेन "सविशेषणे हीति" न्यायेन संसर्गस्यैव प्रतियोगित्वेन प्रतीत्युल्लेखाच्च । अत एव केचिदाहुः — "प्रतियोग्यधिकरणसंसर्गारोपजन्यनिषेधधीविषयोऽभावः संसर्गाभावः" इति । अत एवोदयनः —संसर्गो ह्यत्र निषिध्यत इति । संसर्गस्यैव निषेध्यत्वमाहेति भावः ॥ तस्येति ॥ उक्तयुक्त्या इह भूतले घटो नास्तीत्यत्र संसर्गस्यैव निषेधोऽङ्गीक्रियेत; अत्यन्ताभावत्वं तु नाङ्गीक्रियते. संज्ञानिरुक्तिलक्ष्यलक्षणशून्यत्वादित्यर्थः । स्यादिति ॥ तथा च विभागव्याघात इति भावः ॥ यथासंभवमिति ॥ घटापनयनात्प्राक् संसर्गप्रागभावः । तदपनयनानन्तरं संसर्गप्रध्वंसः । एवं पुनरुपनयनापनयनयोस्संसर्गान्तरप्रागभावप्रध्वंसाविति नोत्पादविनाशशीलः कश्चिदभावो, नापि सदातनो घटाभाव इति भावः ।

ननु— अश्वे गोत्वं कदापि नास्तीति आदौ प्रतीयमानगोत्वाद्यभावश्चतुर्थः स्यात् । निरवधिकत्वेन तस्य प्रागभावाद्यनन्तर्भावात् । प्रामाणिकप्रतियोगिकत्वेन सदाभावानन्तर्भावाच्चेति चेत् — न; उक्तरीत्याऽश्वे गोत्वसंसर्गस्यैव तत्र निषेधेन तस्य चाप्रामाणिकतया तदभावस्य सदाभावान्तर्भावात् । न चात्राश्वो गोत्वाभावाधिकरणतयैव प्रतीयते, न निषेध्यसंसर्गनिरूपकत्वेनेति वाच्यम् । तथा सति अप्रसक्तप्रतिषेधत्वापातेन निषेध्यसंसर्गनिरूपकत्वं वाऽश्वप्रतीतेरङ्गीकार्यत्वात् । किञ्च गोत्वं नास्तीति वाक्यमयोग्यम् । "अश्वे" इति पदसमभिव्याहृतं तु योग्यमिति सर्वसिद्धम् । तत्र यद्यश्व इति पदमभावान्वितं स्यात्तर्हि

**भावं विभज्य दर्शयति — चेतनेति ॥** 'चेतनाचेतनत्वेन भावोऽपि द्विविधो मतः' ॥ न केवलमभावो भेदवान्, किन्तु भावोऽपीत्यपिशब्दः । चेतयतीति चेतनः । अनेवंविधोऽचेतनः । नित्यत्वात् चेतनत्वं अभावस्याचेतनत्वं च ज्ञातव्यम् । सर्वमचेतनं चेतनार्थमिति चेतनस्य प्राधान्यात्पूर्वमुद्देशः । मृदब्रवीदित्यादिवचनात्

श्री विजयीन्द्रतीर्थाः ॥

भेदप्रतीत्युपपत्तेर्भेद इति यौगिकभेदे चातिरिक्ते तस्मिन् मानाभावादित्ययुक्तमित्यर्थः ॥ **कार्यकारणयोरिति** ॥ उपादानोपादेययोरित्यर्थः ॥ **संसर्गस्य**= सम्बन्धव्यतिरिक्तस्य, समवायाभिधानस्येत्यर्थः ॥ **निरस्तत्वेनेति** ॥ न चैव विशिष्टबुद्धिः । अभेदस्यैव वैशिष्ट्यसत्त्वेन तदभावादिति भावः ॥

**चेतनेति** ॥ चेतनशब्दव्युत्पत्त्यनुसारेणेत्यर्थः । चेतनस्य प्रथमोद्देशे नियामकमाह — **सर्वमिति** ॥ चेतनार्थं = चेतनोद्देश्यमित्यर्थः । उपलक्षणं चैतत्, चेतनस्याचेतननिरूपकत्वेनादौ चेतनोद्देश इत्यपि द्रष्टव्यम् ।

श्री वेङ्कटभट्टाः ॥

सुतरामयोग्यम्, गोत्वादितत्वे तु विशिष्टाभावसम्पादकत्वेन भवति गत्यमिति संसर्गस्यैव निषेध आवश्यकः । संसर्गावच्छिन्नप्रतियोगिकाभावत्वं संसर्गाभावत्वं वदद्भिरपि संसर्गनिषेधोऽङ्गीकृत एवेति दिक् ॥

**तदुभयमिति** ॥ मतद्वयेऽप्यभावचतुष्टयसाम्येऽपि वैशेषिकपरिभाषितं साक्षादभावविभाजकोपाधिद्वित्वं अक्षपादपक्षलक्षीकृतं तादृशोपाधिचतुष्टमभिप्रेत्य उभयमित्युक्तमिति ज्ञेयम् ॥ ननु विष्णुतत्त्वनिर्णयादौ — भेदस्यैव धर्मिस्वरूपत्वमुपपादितं, न अन्योऽन्याभावस्येत्यत आह — **अन्योऽन्याभावो हीति** ॥ आद्यमते दोषान्तरमाह — **कार्येति** ॥ सति ह्युपादानोपादेययोस्संसर्गे तत्संसर्गप्रतियोगिकत्वात् संसर्गावच्छिन्नप्रतियोगिकत्वाद्वा प्रागभावप्रध्वंसयोः संसर्गाभावत्वं स्यात्, स एव नास्तीति भावः । प्रामाणिकसंसर्गप्रतियोगिकस्याभावस्य

सर्वं चेतनमेवेति मतनिरासाय 'मत' इत्युक्तम् । तच्चाभिमान्यधिकरणे निरस्तम् । चेतनादिविभागस्य नित्यादिविभागादभ्यर्हितत्वात् स एवादावुदाहृतः ॥

यथोद्देशं चेतनविभागमाह — दुःखेति ॥

दुःखस्पृष्टं तदस्पृष्टमिति द्वेधैव चेतनम् ।
नित्याऽदुःखा रमाऽन्ये तु स्पृष्टदुःखास्समस्तशः ॥ २ ॥

---

श्री विजयीन्द्रतीर्थाः ॥

नन्वभिमानिमात्रेण कथं तन्निरास इत्यत आह—तच्चेति ॥ मृदादिशब्दस्य स्वार्थपरत्वे बाधात्, तत्तदभिमानिदेवतायां लाक्षणिकत्वेन 'भूतं भूताभिमानी चे' ति वाचकत्वसमर्थनेनैव वा निरस्तमित्यर्थः । अभ्यर्हितत्वादिति ॥ चेतनमुद्दिश्य सर्वस्य विधेयत्वादिति भावः । यद्वा — तथाऽऽदिप्रतिपत्तिसद्भावादिति ॥

---

श्री वेङ्कटभट्टाः ॥

नात्यन्ताभावत्वमित्युक्तम्, अत्यन्ताऽसत्प्रतियोगिकस्य त्वत्यन्ताभावस्य न संसर्गप्रतियोगिकत्वमिति, उभयथापि नात्यन्ताऽभावस्य संसर्गाभावत्वमिति वा उक्तार्थतात्पर्यम् । अभावत्रैविध्यस्यानुक्तत्वात अपिशब्दोऽनुपपन्न इत्यत आह—न केवलमिति ॥ अपिशब्द इति ॥ [1]सामान्यसमुच्चायक इति शेषः ॥ चेतयतीति ॥ 'चिती=संज्ञान' इत्यस्य 'नन्द्यादि' त्वात् ल्युप्रत्यये रूपमेतदिति भावः ॥ तन्नेति ॥ संज्ञानिरुक्तिलब्धलक्षणसत्त्वेनेत्यर्थः ॥ अभिमान्यधिकरण[2] इति ॥ तत्र हि — मृदादीनां वचनबुद्ध्यादिकर्तृत्वप्रतिपादकवेदभागस्य, 'मृन्न वक्त्री, जडत्वा' दित्यनुमानविरोधेनाप्रामाण्ये प्राप्ते मृदादिशब्दानां तदभिमानिपरत्वेन न तादृशवेदभागस्याप्रामाण्यमित्येवं 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या' मिति भगवता बादरायणेन सिद्धान्तितम् । यदि सर्वं चेतनं स्यात्तदाऽयं पूर्वः पक्षः । सिद्धान्तश्चायुक्तस्स्यात् । अतस्सर्वचेतनमतं सूत्रकृता अभिमान्यधिकरणे निरस्तप्रायमित्यर्थः ॥

---

1. उभयसाधारणविभागमात्रसमुच्चायकः । 2. (ब्र. सू. २-१-६)

कदाचिद्दुःखमसम्बद्धमेव दुःखस्पृष्टम्, कदापि दुःखासम्बद्धं तदस्पृष्टम्। कल्पितत्वाद् दुःखादीनां न किञ्चिद्दुःखस्पृष्टमित्येके। ईश्वरातिरिक्तं सर्वमपि दुःखस्पृष्टमेवेत्यन्ये। तदुभयनिरासाय प्रकारः। आद्यस्य प्रत्यक्षविरुद्धत्वात्। द्वितीयस्य आगमविरुद्धत्वात्। परमेश्वरस्य दुःखास्पृष्टत्वं स्वातन्त्र्येणैव सिद्धम्। यद्यप्यनयोः दुःखास्पृष्टं चेतनं प्रधानम्, तथाप्यभावस्य भावनिरूप्यत्वात् दुःखस्पृष्टस्य प्रथममुद्देशः।

---

श्री विजयीन्द्रतीर्थाः ॥

सर्वदा दुःखसम्बद्धस्यासम्भवित्वादाह — **कदाचिदिति** ॥ संसारिणि सुषुप्त्यादावतिव्याप्तिराह — **कदापीति** ॥ त्रैकालिकदुःखनिषेधवदित्यर्थः। **प्रत्यक्षविरोधित्वादिति**। 'अहं दुःखी' त्यादिप्रत्यक्षविरोधित्वादित्यर्थः। न च तदप्रमाणम्, बाधकाभावात्। **द्वितीयस्येति** ॥ ईश्वरातिरिक्तस्य सर्वस्यैव दुःखस्पृष्टत्वमित्यस्य (मतस्य) "नित्यं निर्दुःखरूपत्वात् श्रीः परे" त्यादिमूलभूतागमविरोधादित्यर्थः। ननु श्रीरूपाऽस्वतन्त्रचेतनस्य दुःखाऽस्पृष्टत्वलाभेऽपि ईश्वरस्यैव दुःखाऽस्पृष्टत्वं न लब्धमित्यपेक्षायामाह -- **परमेश्वरस्येति** ॥ **स्वातन्त्र्येणैवेति** ॥ दुःखित्वविरुद्धस्वातन्त्र्येणोद्देशादित्यर्थः ॥ **अनयोरिति**॥

श्री वेङ्कटभट्टाः ॥

ननु प्रागुक्तरीत्याऽभावो द्विविधः — नित्योऽनित्यश्च, नित्योऽपि द्विविधः — चेतनोऽचेतनश्चेत्येव विभागः कुतो न कृतः, अनित्यस्याचेतनत्वमेवं सति नोक्तं स्यादिति चेत्। तथासति चेतनस्य नित्यत्वं नोक्तं स्यादिति समम्। लक्षणसत्त्वेन (तद्ज्ञान)तज्ज्ञानमुभयत्रापि तुल्यम्, अतः केन विशेषेण [1] चेतनादिविभागस्य प्राथम्यमित्यत आह — **चेतनादिविभागस्येति** ॥ **अभ्यर्हितत्वादिति** ॥ श्रीतत्त्वादीनामवश्यज्ञेयानां चेतनविभागस्थत्वादिति

तथापि प्राधान्यक्रमस्य मुख्यत्वात् तदनुसारेण द्वे अपि निर्दिशति नित्यानि ॥ अन्ये = चेतनाः ।

एके तु व्यष्टिसमष्टिभेदेन जीवान् परिकल्प्य गरुडानन्तविष्वक्सेनादीन् समष्टिजीवानपि नित्याऽदुःखानाचक्षते । तन्निरासाय 'समस्तश' इत्युक्तम् । अत्र चागमानां प्रामाण्यम् । अत एव दुःखाऽस्पृष्टे प्रभेदाभावात् दुःखस्पृष्टापेक्षयैव 'धाम[1] त्रयः पूर्वोक्तो ज्ञातव्यः ॥

1. एधाच: स्थानिभूत इति शेषः ।

---

श्री विजयीन्द्रतीर्थाः ॥

दुःखस्पृष्टतदस्पृष्टयोर्मध्य इत्यर्थः । यद्येवं तदा उत्तरत्र च वैपरीत्येन निर्देशोऽनुपपन्न इत्यत आह — तथापि प्राधान्येति ॥ न चैव प्राधान्यक्रमस्य मुख्यत्वे प्रथममपि तथानिर्देशः कुतो न कृत इति वाच्यम् । प्रतियोगिज्ञानं विना प्रथमं दुःखास्पृष्टस्य ज्ञातुमशक्यत्वात् । प्रकृते च प्रथमं निर्देशेनैव उभयोर्ज्ञातत्वे प्राधान्यक्रमस्यैवाहर्तुमुचितत्वादित्यत्र तात्पर्यादिति ॥

आगमानामिति ॥ 'दुःखासंपीडनत्वात् मध्यमो वायुरुच्यते ।
दुःखस्य योगतो भोगात् रुद्रवीन्द्रादयोऽधमाः' ॥ इति मूलभूतागमानामित्यर्थः ॥ अत एवेति ॥ गरुडादेः दुःखास्पृष्टत्वबाधादेवेत्यर्थः ॥

---

श्री वेङ्कटभट्टाः ॥

व्याप्त्यादिपदमपहाय स्पृष्टपदप्रयोगेण लब्धमर्थमाह — कदाचिदिति ॥ आगमेति ॥ "द्वौ वा अवसत्यनुपक्रमौ प्रकृतिश्च परमश्चे" ति श्रुत्या, "समनाचाऽसृत्युपक्रमादमृतत्वं चानुपोष्ये" (ब्र. सू. ४-२-५) ति सूत्रेण च विरुद्धत्वादित्यर्थः ।

ननु परमेश्वरस्य दुःखास्पृष्टत्वसिद्ध्यर्थमयं विभाग आदावेव कार्य इत्यत आह — परमेश्वरस्येति ॥ स्वातन्त्र्येणैवेति ॥ तत्त्वविभाजकस्वातन्त्र्येणैवेत्यर्थः । तथापि प्राधान्येति ॥ निरूपकज्ञानं विना निरूप्यस्य ज्ञातुमशक्यत्वेन दुःखस्पृष्टस्य प्रथममुद्देशोऽपि ज्ञातयोर्धर्मिग्राहकयोः निर्देशो प्राधान्यक्रम प्रधानमर्थस्य

स्पृष्टदुःखा विमुक्ताश्च दुःखसंस्था इति द्विधा ।
दुःखसंस्था मुक्तियोग्या अयोग्या इति च द्विधा ॥ ४ ॥

विमुक्ताः, दुःखात् । दुःखसंस्थाः = वर्तमानदुःखाः । चशब्दो दुःखसंस्था इत्यतः परं योज्यः । अत्र प्राधान्यक्रमेणोद्देशः ।

दुःखसंस्थानां प्रभेदमाह — दुःखसंस्था इति ॥ अयोग्याः, मुक्तेः । अयोग्या इत्यतः परं चशब्दो ज्ञातव्यः । अत्रापि तद्वदेवोद्देशक्रमे निमित्तम् ॥

ननु च प्राधान्याद्विमुक्तभेदः प्रथमं वक्तव्यः । सत्यम् ।

---

श्री विजयीन्द्रतीर्थाः ॥

देवेत्यर्थः ॥ **अत एव तदिति** ॥ दुःखस्पृष्टे भेदसद्भावादेवेत्यर्थः । दुःखस्पृष्टदुःखानां दुःखाधेयत्वं स्वरूपं दुःखसंस्थत्वं बाधितमत आह — **वर्तमानेति** ॥ न च सुषुप्त्यवस्थायामव्याप्तिः, वर्तमानदुःखत्वेन दुःखप्रागभाववत्त्वस्य विवक्षितत्वात् ॥ स्पृष्टदुःखानां साधारणतया समुच्चेयत्वाभावादाह — **च शब्द इति** ॥ **अत्रेति** ॥ अविद्यानवच्छिन्नचेतनत्वेन विमुक्तानां प्राधान्यं द्रष्टव्यम् ॥

---

श्री वेङ्कटभट्टाः ॥

इति भावः ॥ **अत एवेति** ॥ गरुडादीनां दुःखास्पृष्टत्वे हि दुःखास्पृष्टेष्वपि भेदस्स्यात् — न चैवम् । तस्य 'समस्तश' इत्यनेन निरस्तत्वादित्यर्थः ॥ [1]**एधाच् प्रत्यय इति** ॥ एधाचो धार्थे सत्त्वादित्यर्थः । यथाच प्रकारद्वैविध्योक्तिः सत्यपवादे अवान्तरभेदेनाप्युपपन्ना नापवादविषयेऽवान्तरभेदं सूचयति, तथोपपादितमधस्तात्[2] ॥

---

1. एधाच् प्रत्यय इति पाठं मत्वेदम् । 2. "स्वतन्त्रमस्वतन्त्र" मिति मूलव्याख्यानटीकाविवरणावसरे ।

योग्यायोग्यभेदस्य दुःखसंस्थस्यैव भावात् तदभिधानानन्तरं मुक्ति-योग्यभेदकथनस्य सौकर्यात् क्रमोल्लङ्घनम् ॥

> देवर्षिपितृपनरा इति मुक्तास्तु पञ्चधा ।
> एवं विमुक्तियोग्याश्च तमोगाः सृतिसंस्थिताः ॥ ५ ॥

इदानीं मुक्तानां प्रभेदमाह — देवर्षीति ॥

पान्तीति पाः = चक्रवर्तिनः । **नराः** = मनुष्योत्तमाः । तु शब्दोऽवधारणे । तेन ये मोक्षे तारतम्यं न मन्यन्ते तन्मतं

---

श्री विजयीन्द्रतीर्थाः ॥

**दुःखसंस्थानामिति** ॥ दुःख[1]प्रागभावानामित्यर्थः । **तदेवेति** ॥ मुक्तियोग्यत्वेन प्राधान्यमेवेत्यर्थः । प्राधान्यादित्युपलक्षणम् । उद्देशक्रमानुमानादित्यपि बोध्यम् ॥ **विमुक्तभेद इति** ॥ विमुक्तानां मुक्तिस्वरूपयोग्यताप्रभेदतया तन्निरूपणानन्तरं विमुक्तभेदस्य निरूपयितुमुचितत्वादित्यर्थः । पितृपत्वमप्येको विभाजकोपाधिरिति भ्रमं वारयितुमाह — **पातीति** ॥ नरत्वं मुक्तेष्वपि प्रसक्तमत आह — **मनुष्योत्तमा इति** ॥ ननु विभागेनैव न्यूनाधिकसंख्याव्यवच्छेदस्य लाभात् अवधारणार्थक-तुशब्दो व्यर्थ इत्याशङ्क्य तत्प्रयो-

---

श्री वेङ्कटभट्टाः ॥

अत एवाह — **अत एवेति** ॥ अपवादाभावेन दुःखस्पृष्टावान्तरभेदस्य प्रकारद्वित्वोक्त्या सूचितत्वादेवेत्यर्थः। स्पृष्टदुःखानां दुःखाधेयत्वानुपपत्तेराह — [1]**दुःखसंस्था इति** ॥ तथाच दुःखस्य संस्था=स्थितिर्येषां ते — दुःखसंस्था इत्यभिप्रेत इति भावः । **योग्यायोग्येति** ॥ मुक्तियोग्यानां दुःखसंस्थप्रभेदतया दुःखसंस्थविभागकथनेन मुक्तियोग्यानां ज्ञाने सति 'देवर्षी' त्यादिनोक्तमुक्तामुक्तदेवर्ष्यादिभेदस्य 'एवं विमुक्तियोग्याश्चे'त्यतिदेशायोगेन योग्यप्रभेदकथनं सुकरं भवेत् । प्राधान्यमनुसृत्य विमुक्तप्रभेदस्य प्रथमोक्तौ हि दुःखसंस्थविभागस्य मुक्तियोग्यज्ञानेन 'एवं विमुक्तियोग्याश्चे'त्यतिदेशायोगेन

---

1. अर्श आदित्वादच्प्रत्ययान्तात् षष्ठी – तद्वतामित्यर्थः ।

**निराचष्टे । गन्धर्वादीनां केषाञ्चिदेष्वेवान्तर्भावात् केषाञ्चिदविवक्षितत्वात्, न ग्रन्थान्तरविरोधः । दुःखसंस्था मुक्तियोग्यायोग्यभेदाद्द्विविधा इत्युक्तम् । तत्र मुक्तप्रभेदं योग्येष्वतिदिशति — एवमिति ॥ एवं विमुक्तियोग्याश्च ॥ देवर्ष्यादिभेदेन पञ्चधेत्यस्यानुकर्षणार्थः चकारः ॥**

**मुक्त्ययोग्यविभागमाह — तमोगा इति ॥ इति द्विधा मुक्त्ययोग्याः । तमोगाः = तमोयोग्याः । न तु प्राप्ततमसः, वक्ष्यमाणविभाग-**

---

श्री विजयीन्द्रतीर्थाः ॥

जनमाह — **तेनेति** ॥ आनन्दादितारतम्यस्य मोक्षेऽपि [1]श्रवणादिति भावः । ननु गन्धर्वादीनां मुक्तत्वश्रवणात् न्यूनो विभाग इत्यत आह—**गन्धर्वादीनामिति ॥ केषाञ्चिदिति** ॥ देवभिन्नानां गन्धर्वादीनां अमुक्तत्वेनासङ्ग्राह्यत्वादित्यर्थः ॥ **ग्रन्थान्तरेति** ॥ गन्धर्वादीनां मुक्तत्वबोधकग्रन्थान्तरेत्यर्थः ॥ **मुक्तप्रभेदमिति** ॥ विमुक्तप्रकारमित्यर्थः ।

---

श्री वेङ्कटभट्टाः ॥

योग्यप्रभेदकथनं सुकरं न स्यात् । प्राधान्याद्विमुक्तभेदकथनानन्तरं दुःखसंस्थान् विभज्य तत्प्रभेदानां मुक्तियोग्यानां 'देवर्षिपितृपनरा इति योग्यास्तु पञ्चधे'ति विभागोपदेशो दुष्करस्स्यात् । अतोऽतिदेशसौकर्यात् क्रमोल्लङ्घनमित्यर्थः । यद्यपि **प्राधान्येन** विमुक्तभेदकथनानन्तरं दुःखसंस्थान् विभज्य तत्प्रभेदमुक्तियोग्यानां मुक्तियोग्याः विमुक्तवत् भिन्ना इत्यतिदेशः शक्यते कर्तुम् । तथापि 'एवं विमुक्तियोग्याश्च'त्यनेनैव न विभागविशेषातिदेशस्सिद्ध्यतीति भावः । अत एव वक्ष्यति—'देवर्ष्यादिभेदेन पञ्चधेत्यस्यानुकर्षणार्थः चकार' इति ॥ **निराचष्ट इति** ॥ यद्यपि देवर्षीत्यादिवाक्ये विभाग एव प्रतीयते स्फुटं, न तारतम्यम्, तथापि — संसारदशायां तारतम्योपेते ब्रह्मादौ प्रसिद्ध-

इति द्विधा मुक्त्ययोग्याः दैत्यरक्षःपिशाचकाः ।
मर्त्याधमाश्चतुर्धैव तमोयोग्याः प्रकीर्तिताः ॥ ६ ॥

**मर्त्याधमा इत्यतः परं इतिशब्दोऽध्याहार्यः। अप्रसिद्धत्वादस्य भेदस्याश्रद्धेयत्वं निवारयितुं एवशब्दः। प्रकीर्तिता इति — अत्रागमसम्मतिमाचष्टे। स [1]चान्यत्रोदाहृतो द्रष्टव्यः ॥**

1. अन्यत्र = शास्त्रेषु.

---

श्री विजयीन्द्रतीर्थाः ॥

दैत्यादिषु प्रत्येकं चातुर्विध्यान्वयभ्रमं वारयितुमाह — **इतिशब्दोऽध्याहार्य इति** ॥ उक्तप्रभेदस्याश्रुतचरत्वात् अप्रामाणिकत्वशङ्कां वारयितुमेवकार इत्याह — **अप्रसिद्धेति** ॥ नन्वेतावतापि अप्रामाणिकत्वशङ्का वारिता कथमित्यत आह — **प्रकीर्तिता इत्यत्रेति** ॥

---

श्री वेङ्कटभट्टाः ॥

प्रभृतीनामपि मुक्तप्रभेदत्वेन —

" क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।
आजानजाः कर्मजाश्च देवा इन्द्रः पुरन्दरः ॥ "

इत्यादावुक्तत्वात् कथं पञ्चधेत्युक्तमित्यत आह — **गन्धर्वादीनामिति** ॥ अत्र देवपदेन तात्त्विकानामिव कर्मजाऽऽजानजानामपि देवानां ग्रहणम्, "तुम्बुरुप्रमुखा ये च तथोर्वश्यादिका अपि। आजानदेवास्ते प्रोक्ताः" इत्युक्तेः तुम्बुरुप्रमुखशतगन्धर्वाणां, उर्वश्याद्यप्सरसां चाजानदेवेष्वन्तर्भावात्। तुम्बुरुप्रमुखेभ्यः उत्तमगन्धर्वाणां चाष्टानां, 'कर्मदेवगणा अष्टगन्धर्वास्तत्परे शतम्। आजानदेवा' इत्युक्त्या मुक्तकर्मदेवेष्वन्तर्भावात्। तदन्येषां देवगन्धर्वादीनां तारतम्योक्तिपरेऽस्मिन् विभागवाक्ये विवक्षाविरहात् न 'क्षितिपा' इत्यादिग्रन्थान्तरविरोध इत्यर्थः। न हि विभागवाक्यान्तरस्येव अस्य वाक्यस्य न्यूनाधिकसंख्याऽवान्तरव्यवच्छेदे तात्पर्यम्, किन्तु मुक्ता देवर्ष्यादिभेदेन तारतम्योपेता एवेत्यत्रैव। न चात्र ग्रन्थान्तरविरोधोऽस्तीति भावः। अत एव तत्त्वविवेके ह्यत्र " ब्रह्मान्ता

चतुर्विधा अप्यते प्रत्येकं द्विधा इत्याह — ते चेति ॥

ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधा ।
नित्यानित्यविभागेन त्रिधैवाचेतनं मतम् ॥ ७ ॥

ते च = चतुर्विधा अपि । सृतिसंस्थाः = संसारे वर्तमानाः ॥ नाधुनाऽपि तमःप्राप्ताः । योग्यतायाश्चैतन्यस्वभावत्वेन तमोयोग्यानामयं विभागो नानुपपन्नः ।

एवं चेतनविभागं विस्तरेणाभिधाय अवसरप्राप्तमचेतनविभागमाह — नित्येति ॥ अत्राप्यचेतनमेव एवं विभागवदित्यर्थानभ्युपग-

श्री विजयीन्द्रतीर्थाः ॥

ननु तमोयोग्यतायाः सृतिसंस्थामात्रवृत्तित्वात् कथमन्धन्तमः प्राप्तोऽपि तमोयोग्यमध्ये विभज्यत इत्यत आह — योग्यताया इति ॥ चैतन्यविशेषे अन्धन्तमः प्राप्तिकालेऽपि सत्वात् नोक्तविभागानुपपत्तिरित्यर्थः ।

नन्वेवम् — एवकारस्योद्देश्यान्वितत्वे उद्देश्यतानवच्छेदकानाक्रान्तविधेयव्यवच्छेदो लक्ष्यते, न चैतद्युक्तम् — चेतनस्यापि नित्यत्वादित्यत आह —

श्री वेङ्कटभट्टाः ॥

उत्तरोत्तरमुक्ताः शतगुणाः प्रोक्ताः '' इति तारतम्यमेवोक्तम् । इदमपि वाक्यं तेनेत्यादिना मोक्षे तारतम्याभावमतनिराकरणपरत्वेन व्याख्यातमिति बोध्यम् । मुक्तप्रभेदकथनेन व्यवहितं दुःखसंस्थप्रभेदं स्मारयति — दुःखसंस्था इति ॥ तमोगाः = तमोयोग्या इति ॥ अत एव 'चतुर्धैव तमोयोग्याः प्रकीर्तिता' इति वक्ष्यतीति भावः ॥ वक्ष्यमाणेति ॥ ते च प्राप्तान्धतमसः सृतिसंस्था इति द्विधेति वक्ष्यमाणविभागविरोधादित्यर्थः । प्राप्ततमसां सृतिसंस्थत्वाभावादिति भावः । अयोग्यतेति ॥ विभज्यमानमुक्त्ययोग्यनिष्ठमिथ्याज्ञानलक्षणमुक्त्ययोग्यताऽतिशयानुसारेणेत्यर्थः । मर्त्याधमानां चातुर्विध्यान्वयभ्रान्तिं वारयितुमाह — मर्त्याधमा इत्यत इति । अप्रसिद्धत्वादिति ॥ अतिप्रसिद्धत्वाभावादित्यर्थः । अत एवोक्तार्थे प्रकीर्तिता इत्यनेनागमप्रसिद्धिरुक्तेत्याह — प्रकीर्तिता इति ॥

मात् पूर्वोक्ततत्वानामपि प्रमाणान्तरेण नित्यत्वादिग्रहणं न विरुद्धम् । नित्यानित्यविभागेनेत्यस्य नित्यानित्यत्वेन तद्विभागेन चेत्यर्थः । तथा च नित्यानित्यं, नित्यं, अनित्यं चेति अचेतनं त्रिविधमित्युक्तं भवति । केचित् — सर्वं क्षणिकं मन्यमाना नित्यं न मन्यन्ते । अपरे तु — सत्कार्यवादिनः अनित्यं नाङ्गीकुर्वन्ति । सर्वेऽपि नित्यानित्यं विरोधान्नाभ्युपगच्छन्ति । तन्निरासाय एवकारः । न प्रतिज्ञामात्रेणार्थसिद्धिरिति प्रामाणिकत्वमुक्तविभागस्य सूचयति — मतमिति ॥ तच्च लेशतो दर्शयिष्यामः । यद्यपि नित्यं, नित्यानित्यं, अनित्यमित्युद्देशः कार्यः प्राधान्यात् । तथाप्युक्तिलाघवाय क्रमोल्लङ्घनम् ।

---

श्री विजयीन्द्रतीर्थाः ॥

अत्रापीति ॥ एवकारस्य विधेयान्वितत्वादिति भावः । ननु नित्याऽनित्यविभागेनेत्यादिना विधाद्वयस्य लाभात् त्रिविधत्वोत्कीर्तनं विरुद्धमत आह — नित्यानित्यविभागेनेत्यस्येति ॥ भावप्रधाननिर्देशाध्याहाराभ्यां त्रैविध्योक्त्युपपत्तेर्नोक्तदोष इति भावः ॥ लेशत इति ॥ नित्या वेदा इत्यादिनेति

---

श्री वेङ्कटभट्टाः ॥

ननु प्राक्सृतिसंस्थपदेन नित्यसंसारिणामुक्तत्वात्कथं तेषां तमोयोग्यप्रभेदत्वमित्यतः सृतिसंस्थपदं व्याचष्टे — संसार इत्यादिना ॥ अधुनापीति ॥ प्राप्स्यमानतमस इत्यर्थः । ननु योग्यतायाः फलप्राप्तिपर्यन्तत्वात् कथमन्धन्तमस्थानां तमोयोग्यप्रभेदत्वमित्यत आह — योग्यताया इति ॥ "स्वभावाख्या योग्यता या हठाख्या, याऽनादिसिद्धा सर्वजीवेषु नित्या" (महाभा. निर्ण. २२-८४) इत्युक्तेरित्यर्थः ।

ननु स्वतन्त्रतत्वमभावतत्वं. चेतनत्वं च नित्यम्? अनित्यम्? नित्यानित्यं वा? न त्रयमपि! त्रयस्याप्यचेतने तत्र स्वतन्त्रचेतनतत्वयोरभावतत्वमध्येप्यत्यन्ताभावस्य, नित्यत्वप्रभेदत्वेनोच्यमानत्वादित्यत आह — अत्रापीति ॥ नित्यत्वादीत्यादिपदेन नित्यानित्यत्वग्रहणम् । प्रागभावप्रध्वंसयोर्नित्यानित्यत्वमिति बोध्यम् । 'नित्यानित्यविभागेने'त्यस्य नित्यानित्यत्वभेदेनेतिवत् नित्यानित्य-

क्रमेण त्रयं दर्शयिष्यन् नित्यं तावद्दर्शयति — नित्या इति ॥

नित्या वेदाः पुराणाद्याः कालः प्रकृतिरेव च ।
नित्यानित्यं त्रिधा प्रोक्तमनित्यं द्विविधं मतम् ॥ ८ ॥

अत्र नित्यत्वं नाम कूटस्थतया आद्यन्तशून्यत्वम् । तच्च वेदानां "नित्या वेदास्समस्ताश्चे" त्यादिप्रमाणसिद्धम् । अत्र वेदा इत्युपलक्षणम् । पञ्चाशद्वर्णानामव्याकृताकाशस्य च तथाभावात् ।

नित्यानित्यं विभागेनाह — पुराणाद्या इति ॥ पुराणाद्याः पौरुषेयग्रन्थाः एका विधा । कालोऽपरा । प्रकृतिरन्या ॥

---

श्री विजयीन्द्रतीर्थाः ॥

भावः ॥ प्राधान्यादिति ॥ उपजीव्यत्वादित्यर्थः ॥ कूटस्थतयेति ॥ नित्यत्वं = क्रमाद्यन्तशून्यत्वं, अत्र हेतुः — कूटस्थतयेति ॥ अपरिणामितयेत्यर्थः ॥

---

श्री वेङ्कटभट्टाः ॥

त्वाभ्यां विभागेनेत्यर्थप्रतीतिं वारयितुमर्थमाह — नित्यानित्यविभागेनेत्यस्येति ॥ इत्युद्देश इति ॥ अत एव तथैव निदर्शयिष्यतीति भावः । उक्तिलाघवायेति ॥ नित्यानित्यस्य प्रथमोद्देशो हि विभागपदेन तद्विभागभूतयोर्नित्याऽनित्ययोर्ग्रहणसम्भवादुक्तिलाघवं भवति । अन्यथा हि — नित्यानित्य — नित्यानित्यत्वेनेत्यादिरूपेण विभागोक्तिप्रसङ्गेन गौरवं स्यादिति भावः । नित्यत्वं नित्यानित्यव्यावृत्तं यथा भवति तथा व्याचष्टे —

अत्र नित्यत्वं नामेति ॥ स्वरूपेण आद्यन्तशून्यत्वं प्रकृतावपीत्यतस्तद्व्याख्यानं — कूटस्थतयेति ॥

ननु — क्रमविशेषविशिष्टा वर्णा एव वेदाः, न त्वव्याकृताकाशवदर्थान्तरम्, वर्णाश्च[1] नित्यत्वात्सर्वगतत्वात् स्वतः क्रमशून्याः, अतः क्रमः बुद्धिनिमित्त एवास्थेयः ॥ [2]उक्तं हि —

ननु च त्रिधेति प्रकारत्रैविध्यमुक्तम् । न चात्र कश्चित्प्रकारो दर्शितः । किन्तु वस्तुनिर्देश एव कृतः । नैष दोषः । **यन्न सर्वथा** कूटस्थं नाप्यनित्यमेव तदुच्यते = नित्यानित्यम् । तस्य तिस्रो विधाः सम्भवन्ति ।। उत्पत्तिमत्त्वे सति विनाशाभावः, एकदेशैरुत्पत्तिविनाशौ एकदेशिनस्तदभावः, स्वरूपेणोत्पत्त्याद्यभावेऽप्यवस्थागमापायवत्त्वं चेति।। तदेतद्विधात्रयं उक्तवस्तुत्रये अस्तीति तस्यैव ग्रहणं कृतम् ।। नन्वेवं

---

श्री विजयीन्द्रतीर्थाः ।।

विशेषविभज्यतावच्छेदकप्रदर्शनार्थमेव सामान्यविभज्यतावच्छेदकं तावद्दर्शयति — **यन्न सर्वथेति** ।। सर्वथा उभयान्तरहितभिन्नत्वे सति सर्वथोभयान्तं वा भिन्नत्वमित्यर्थः ।। **शास्त्रीयविधानामिति** ।।

---

श्री वेङ्कटभट्टाः ।।

तत्कथं वेदानां कूटस्थत्वं? कथं च वर्णानामव्याकृताकाशस्य कूटस्थतया प्रमितत्वात नित्यानित्यत्वेनानिर्दिष्टस्य नित्यत्वेनानिर्देश इत्यत आह — **अत्र वेदा इत्युपलक्षणमिति** ।। अत्रोपलक्षणपदेन लक्षणासामान्यमुच्यते, न त्वजहत्स्वार्थे लक्षणा, 'उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तय' इति वदिति ज्ञेयम् । लक्षणीयं दर्शयति — **पञ्चाशदिति** ।। एवं तत्र वेदानां 'नित्या वेदा' इत्यादिपूर्ववाक्यस्यापि कूटस्थत्वं वर्णानां, 'नित्या वेदा समस्ताश्चेत्यादि· प्रमाणेन, 'तत्क्रमेणैव तैर्वर्णैरि'ति यदुत्तरवाक्यं तत्सिद्धमित्यर्थः । अत एवे- 'त्यादी' ति आदिपदप्रयोग इति ज्ञेयम् ।। **प्रकारत्रैविध्यमिति** ।। 'सङ्ख्याया विधार्थे धा' इत्यनेन धा प्रत्ययस्य प्रकारवाचित्वादिति भावः । नित्यानित्यं यथा नित्यानित्याभ्यां व्यावर्तते तथा व्याचष्टे — **यन्न सर्वथेति** ।। अत्र कूटस्थत्वमवधिविधुरत्वम्, अवधिश्च द्विविधः — पूर्व उत्तरश्चेति, द्विविधोऽपि स्वरूपेण स्वाभिन्नांशेन चेत्यनेकविधः । तथा च स्वरूपेण स्वाभिन्नांशादेश्च पूर्वोत्तरेण चावधिना विधुरं यत् नित्यतया विवक्षितं, तद्वत् यन्न भवति, स्वरूपेणाऽवधिद्वयोपेतं यदनित्यत्वेन विवक्षितं तद्वच्च यन्न भवति; तन्नित्यानित्यमित्यु-

सत्यवान्तरभेदे विधान्तरमुत्प्रेक्षितुं शक्यमित्यत एवेत्युक्तम् । तत्र उपपादकाकाङ्क्षायां 'प्रोक्तमि' त्याह — शास्त्रीयविधानामत्रैवान्तर्भावोऽन्यासामनादरणीयत्वं चेति ॥ अथवा "पुराणानि तदर्थानि सर्वे निमेषा जज्ञिरे विकारोऽव्यक्तजन्म हि" इत्याद्यागमपरिग्रहार्थं प्रोक्तमित्युक्तम् । अत एव विरोधोऽपि परिहृतः । नन्वत्र यस्योत्पत्त्यादिकं तदनित्यमेव । यस्य तु तन्नास्ति तन्नित्यमेव । नित्यानित्यं कोऽस्तीति?

श्री विजयीन्द्रतीर्थाः ॥

मुक्त्युपयोगिज्ञानविषयीभूतविधानामित्यर्थः ॥ **अतएवेति** ॥ आगमबाधादेवेत्यर्थः ॥ तद्वं समस्तमिति मूलार्थः । असंसृष्टभिन्नमिति द्रष्टव्यः । ननु

श्री वेङ्कटभट्टाः ॥

**उत्पत्तिमत्त्वे सति विनाशाभाव इति** ॥ इयं विधा पुराणादेः, विष्णुतत्त्वनिर्णयादौ विस्तरेणोपपादिता तत्रैव द्रष्टव्या ॥

ननु — भावरूपा ज्ञानाभावावान्तरभेदः विनाशित्वे सत्युत्पत्त्यभावलक्षणम् । वेदरूपावान्तरभेदे च — उत्पत्तिमत्वे सति विनाशाभावेऽपि क्रमव्यत्यासाभावरूपे च नित्यानित्यविधान्तरं, "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त" इत्यादिसाङ्ख्याद्युक्तं विधान्तरं चोत्प्रेक्षितुं शक्यमित्याशयेन शङ्कते — **नन्वेवमिति** ॥ **तत्रेति** ॥ नित्यानित्यविधास्वेवेत्यर्थः । न चैवं नित्याऽनित्यविभागोद्देश्यानां स्वशब्दानुक्तिः कथमिति वाच्यम् — तत्र पुराणादेः कण्ठरवेणानुक्तिवदुपपत्तेरिति बोध्यम । ननु वर्णानां नित्यविभुत्वात्, कालस्य वैशेषिकादिभिः नित्यत्वाङ्गीकारात्, मूलप्रकृतेरपि साङ्ख्यैरनादित्वस्याङ्गीकृतत्वात्, कथं पुराणादेरुत्पत्तिरित्याशङ्कापरिहारत्वेनापि प्रोक्तमित्येतद्व्याचष्टे — **अथवेति** ॥ **पुराणानि तदर्थानीति** ॥

"पुराणानि तदर्थानि सर्गे सर्गेऽन्यथैव तु ।
क्रियतेऽतस्त्वनित्यानि तदर्थाः पूर्वसर्गवत् ॥"

इत्यन्तस्य वाक्यशेषप्रतीकग्रहणमिति बोध्यम् । **अतएवेति** ॥ ॥ नित्यानित्यानङ्गीकारहेतुविरोधोऽपि नित्यानित्यस्यागमसिद्धत्वात्परिहृत इत्यर्थः । ननु

मैवम् — स्यादेतदेवम् । यद्यंशांशिनोर्विकारविकारिणोर्वाऽत्यन्तभेदस्स्यात् । न चैवमित्यन्यत्रोपपादितमिति ॥ अनित्यं विभज्य दर्शयति अनित्यमिति ॥ 'अनित्यं द्विविधं मतम्' ॥

असंसृष्टं च संसृष्टमसंसृष्टं महानहम् ।
बुद्धिर्मनः खानि दश मात्रा भूतानि पञ्च च ॥
संसृष्टमण्डं तद्गञ्च समस्तं सम्प्रकीर्तितम् ॥ ९ ॥

सम्यक्सृष्टं=संसृष्टम् । अतथाभूतमसंसृष्टम् । सम्यक्त्काया इय-

श्री विजयीन्द्रतीर्थाः ॥

संसृष्टभिन्नत्वमसंसृष्टत्वं, तद्भिन्नत्वञ्च संसृष्टत्वमित्यन्योऽन्याश्रयः, इत्यन्यथा तन्निरुक्तौ दोषं शङ्कते — नन्विति ॥ तेषामपीति ॥ संसृष्टानामपीत्यर्थः ॥

श्री वेङ्कटभट्टाः ॥

भवतु उत्पत्तिमत्वे सति विनाशाभावात्पुराणादेर्नित्यानित्यत्वम्, कालप्रकृत्योस्तु यस्य कालांशस्य प्रकृतिविकारस्य चोत्पत्तिविनाशौ तद्द्वयमनित्यमेव, यस्य तु कालप्रवाहस्य प्रकृतिमूलरूपस्य नोत्पत्तिविनाशौ तद्द्वयं नित्यमेवेति, अंशविकारयोर्वा अंशिविकारिणोर्वा क्व नित्यानित्यत्वमस्तीत्याशङ्कते — नन्विति ॥ अंशादेरत्यन्तभेदाभावेन वस्त्वैक्यात् नित्यानित्यत्वयोरेकवस्तुनिष्ठत्वेन नित्यानित्यत्वं कालप्रकृत्योः संभवतीत्याह — स्यादेतदिति ॥ यद्वा "उत्पत्तिमत्वे सती"ति वाक्यं विशेषणस्योत्पत्तिमत्त्वाद्यभावेऽपि विशिष्टस्योत्पत्तिमत्त्वे सति विनाशाभाव इति व्याख्येयम् । तथाचात्र क्रमविशेषविशिष्टानां वर्णानामेव पुराणादित्वेनोक्तविधा पुराणादावस्तीति भावः । नन्वेत्यादिशङ्कावाक्यं यस्य पुराणादेर्विशिष्टस्योत्पत्तिः कालांशादेरुत्पत्तिविनाशौ तत् त्रयमनित्यमेव । यस्य तु वर्णाख्यस्य विशेष्यस्य कालप्रवाहादेश्च नोत्पत्त्या दि, तत् त्रयं नित्यमेवेति नित्यानित्याख्यतृतीयराशिः क्वास्तीति योज्यम् ॥ स्यादेतदेवम् — यदीत्यनन्तरं विशिष्टशुद्धयोरिति

तत्रासंसृष्टं निर्दिशति — असंसृष्टमिति ॥ संसृष्टं निर्दिशति — संसृष्टमिति ॥

नन्वेषां चतुर्विंशतितत्त्वानामसंसृष्टत्वं नाम यद्येकदेशेनोत्पत्तिः, तर्ह्यनुत्पन्नस्यासत्त्वादुत्पन्नमेव तत्त्वम्। तच्च संसृष्टमेवेति न द्वैविध्यम्। न च प्रकारान्तरमस्तीति — मैवं, सूक्ष्मरूपेण नित्यानां महदादीनां प्राकृताद्यंशैरुपचयमात्रं क्रियत इति तान्यसंसृष्टानि। न चैवं ब्रह्माण्डं तदन्तर्गतानीति संसृष्टानि। तेषामपि मूलरूपं नित्यमिति चेन्न। साक्षान्मूलरूपस्य विवक्षितत्वात्। एवंसति महदादीनां नित्यानित्यत्वं कथं न स्यादिति चेत् — स्यादेवं यदि सूक्ष्मरूपे महदादिव्यवहारः स्यात्। किन्तु प्रकृतिरेव सोच्यते। केचित् महदादिस्वरूपमेव नाभ्युपगच्छन्ति। दूरेणोक्तं विशेषम्। तेषामतिबहुतरागमविरोधं दर्शयितुं संप्रकीर्तितमित्युक्तम्। आगमाश्चान्यत्र द्रष्टव्याः। विस्तरभिया नेहोदाह्रियन्ते। यदीदं विष्णुव्यतिरिक्तं भावाऽभावादिभेदभिन्नं जगदस्वतन्त्रं, तर्हि कस्मिन्नायत्तं, कस्मिंश्च विषये इत्याकांक्षायामाह — सृष्टिरिति ॥

---

श्री विजयीन्द्रतीर्थाः

विवक्षितत्वादिति॥ नित्यत्वेनेति शेषः। संसृष्टे तु नैवम्, तत्र साक्षादुपादानस्यानित्यत्वादिति भावः॥ महदादिव्यपदेश इति॥ महत्पदाभिधेये नित्यत्वाभावादित्यर्थः। तत् किं तन्निरपेक्षमेवेत्यत आह — किन्तु प्रकृतिरेवेति॥ न तु योगोऽपि कस्य कुत्रेत्यत आह — तत्रेति॥ विष्णुरेवास्येति॥

---

श्री वेङ्कटभट्टाः ॥

निष्ठतया नित्यानित्यत्वात्स्यतृतीयराशिस्संभवतीति भावः। अतएव तत्त्वविवेकटीकायां 'पुराणादि येनांशेन नित्यं तमंशं नित्यवर्गे निधाय, येनांशेनाऽनित्यं तमंशमनित्यवर्गे निधायेत्युक्त'मिति बोध्यम्। सम्यक्तया इयत्ताभावादिति॥ अन्यूनानतिरिक्तस्यैकस्य सम्यक्तस्य निर्वक्तुमशक्यत्वा

सृष्टिः स्थितिः संहृतिश्च नियमोऽज्ञानबोधने ।
बन्धो मोक्षः सुखं दुःखमावृतिर्ज्योतिरेव च ॥
विष्णुनाऽस्य समस्तस्य समासव्यासयोगतः ॥ १० ॥

नियमः = व्यापारेषु प्रेरणम् । बन्धः, प्रकृतेः । मोक्षः, बन्धात् । आवृतिज्योतिषी = बाह्यतमःप्रकाशौ । एवकारो विष्णुनेत्यनेन सम्बध्यते । अस्य = समस्तस्यास्वतन्त्रस्य । भवन्तीति शेषः ।

नन्वेतत्पूर्वविरुद्धम् । समस्तस्य सृष्टिसंहारोक्तौ नित्यत्वोक्तिविरोधः । अचेतनस्य बोधविरोध इत्यादि । तत्रोक्तं समासेति ॥ समासः = संक्षेपः । व्यासः = विस्तरः । तावेव योगौ उपायौ उक्तार्थघटनायाम् । ततः इदमुक्तं भवति — उक्तधर्मेषु यत्र तत्वेऽल्पीयांसस्संभवन्ति तत्र तावन्तो विष्णवधीना ज्ञातव्याः । यत्र तु बहवः तत्र तावन्तः। सर्वथा स्वरूपस्वभावौ अस्य तदधीनाविति ॥ तत्र स्थितिनियमौ सर्वस्य । सृष्टिसंहृती — नित्यानित्यस्य अनित्यस्य च । अज्ञानं भावरूपं दुःखस्पृष्टस्य । ज्ञानाभावस्तु सर्वस्य । बोधनं चेतनस्य । सुखं प्राप्ततमसो विना । दुःखं दुःखास्पृष्टं विना इत्यादि द्रष्टव्यम् ॥ पदार्थानां सृष्ट्याद्यन्यतोऽपि प्रतीयते । अत एवेत्युक्तम् । सकल-

---

श्री वेङ्कटभट्टाः ।।

दित्यर्थः॥ मतमिति॥ उक्तमिति॥ मतं=प्रमितम्॥ तथा च प्रमाणानुसारेण युक्त्या विचार्य सम्यक्तया निर्वक्तुमशक्यतया त्रैविध्यमेव सिद्धमित्यर्थः॥ तद्वक्ष्याम इति ॥ ननु एतेषा 'मित्यादिनाऽऽक्षेपपूर्वकं विचार्य साक्षान्मूलरूपस्य नित्यस्याभावे सत्युत्पन्नत्वं संसृष्टत्वम्, साक्षान्मूलरूपस्य नित्यस्य सत्त्वेऽपि उत्पन्नत्वमसंसृष्टत्वमिति वक्ष्याम' इत्यर्थः॥ बह्वागमविरोध इति॥ आगमस्य बहुत्वद्योतनायैव संप्रेत्युपसर्गद्वयमिति भावः॥ बाह्येति ॥ 'अज्ञानबोधन' इत्यनेना अन्तरतमः- प्रकाशयोरुक्तत्वादिति भावः॥ भावरूपमिति॥

सत्तादेस्तदधीनत्वात् तत्तद्वस्तुनिमित्तमात्रमेव। स्वातन्त्र्येण विष्णु-रेवास्येश्वर इति ॥

पद्मापद्मासनाऽनन्तप्रभृतीदं यदिच्छया।
सत्तादि लभते देवः प्रीयतां श्रीपतिस्स मे ॥

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततत्त्वसङ्ख्यान-
विवरणं श्रीमज्जयतीर्थभिक्षुविरचितं
॥ सम्पूर्णम् ॥

श्रीकृष्णार्पणमस्तु

---

श्री विजयीन्द्रतीर्थाः ॥

एवमेव प्रमाणसद्भावादिति भावः ॥

श्रीसुरेन्द्रगुरोश्शिष्यविजयीन्द्रविनिर्मितम्।
समाप्तं तत्वसङ्ख्यानव्याख्याया भाववर्णनम् ॥

इति श्रीमद्विजयीन्द्रभिक्षुविरचितं तत्वसङ्ख्यान
व्याख्यानं भाववर्णनं समाप्तम् ॥

श्रीकृष्णार्पणमस्तु ॥

---

श्री वेङ्कटभट्टाः ॥

ब्रह्मादीनां प्रकृतिबन्धसत्त्वादिति भावः ॥ ज्ञानाभाव इति ॥ रमायाः प्रकृतिसम्बन्धाभावेऽपि [1]ईश्वरे ज्ञानाभावसत्त्वादिति भाव इति प्रतिपादितम्। प्रतिपादितगुणवन्तं भगवन्तं अन्तेऽपि स्तुवन् तत्प्रीतिं प्रार्थयते पद्मेति ॥

कमलाकमलोद्भूतमुखं यदखिलं जगत्।
परतन्त्रमिदं यस्य वशे स प्रीयतां हरिः ॥

---

1. ईश्वरविषय इत्यर्थः।

श्री वेङ्कटभट्टाः ॥

तत्वसङ्ख्यानटीकायाः पञ्जिका भक्तिमात्रतः ।
भूयात्कृता तु सुप्रीत्यै श्रीमन्माधवमध्वयोः ॥

कृपयेमां कृतिं रोट्टी वेङ्कटाद्रिविपश्चितः ।
विदाङ्कुर्वन्तु विद्वांसः किमन्यैः कितवैरिह ॥

इति श्रीमत्तत्त्वसङ्ख्यानव्याख्याविवरणं रोट्टी
श्रीवेङ्कटभट्टोपाध्यायविरचितं
समाप्तम् ॥
श्रीकृष्णार्पणमस्तु ॥



श्रीः

श्रीमद्वेदव्यासाय नमः ।

# ॥ श्री अनन्ताचार्यविरचिता 'तत्वदीपिका' ॥

नारायणं परं ब्रह्म रमां मध्वं पृषत्पतिम् ।
शिवादीन् मध्वशिष्यांश्च श्रीमज्जयमुनीन् गुरून् ॥ १ ॥

येऽध्यापयित्वा निगमान् मध्वसिद्धान्तमादिशन् ।
नरसिंहार्य वर्यांस्तान् भूयो भूयो नमाम्यहम् ॥ २ ॥

येषां मुखाम्बुजाच्छ्रुत्वा यतयो गृहिणस्तथा ।
व्याचख्युर्मध्वशास्त्रं हि नृसिंहार्यान् प्रणौमि तान् ॥ ३ ॥

नरसिंहार्यवर्याणां गुरूणां करूणाबलात् ।
व्याकुर्वे तत्वसंख्यानव्याख्यानं नातिविस्तरम् ॥ ४ ॥

तत्वसंख्यानं व्याचिख्यासुः श्रीमज्जयमुनिः ग्रन्थादौ मङ्गलमाचरन् चिकीर्षितं प्रतिजानीते — लक्ष्मीपतेरिति ॥ गुरोरपि तत्ववादाचार्याणां अक्षोभ्यतीर्थानां चेत्यर्थः ॥ **तत्वसंख्यानेति** ॥ तत्वानां संख्यानं यस्मिंस्तत् = तत्वसंख्यानम् । यद्वा करणे ल्युट् प्रत्ययः । तद्व्याख्यानमित्यर्थः । नातिविस्तरमिति विस्तरशब्दं प्रयुञ्जानस्य इह ग्रन्थे शब्दप्रपञ्चनमेव नास्ति । अर्थप्रपञ्चनं तु विद्यत एवेति भावः ।

ननु इदं प्रकरणं प्रयोजनाद्यभावाद् व्यर्थम् । अपि च स्वतन्त्रतत्वनिरूपणेनैव प्रयोजनसिद्धेः परतन्त्रनिरूपणं व्यर्थम् । अपि च शास्त्रप्रतिपादितत्वादिदं किमर्थम्? इत्यत आह—(पुट-२) **मुमुक्षुणेति** ॥ इदं चेति जगदुदयादिनिमित्तत्वेन ब्रह्मज्ञानमित्यर्थः । एतेनार्थशब्दस्य प्रकृतत्वात् इदमिति कथं परामर्श इति परास्तम् ॥ (पुट-३) **प्रधानेति** ॥ प्रधानभूतं यत्

[illegible] इत्यर्थः ॥ (पु-७) **तेनेति** ॥

तस्य भावस्तत्त्वं चेत् तत्वलक्षणधर्मस्य द्वैविध्यकथनं न युज्यते इत्यादि खण्ड-नानवकाश इत्यर्थः ।

(पृ. ८) अतिव्याप्तिं शङ्कते — **नन्विति** ॥ तदेवोपपादयति — **न हि धर्मीति** ॥ धर्मी शुक्तिरित्यर्थः । यद्वा तादात्म्यारोपस्थलमुपपादयति — **धर्मीति** ॥ रजतमित्यर्थः । संसर्गारोपस्थलमाह — **रजतत्वं वेति** ॥ **नापि तयोः सम्बन्ध इति** ॥ न प्रमेय इति शेषः ।

**इदमत्राकूतम्** । इदं रजतमिति भ्रान्तिविषयाणां.... कतत्वादीनां देशान्तरे सत्त्वेन वस्तुतः तत्वप्रमाविषयत्वमस्त्येवेति ॥ (पृ. ९) **स नास्तीति** ॥ सः सम्बन्धः इत्यर्थः ॥ **न प्रमेय इतीति** ॥ अन्यत्र प्रमितत्वादिति भावः ॥ **नायं दोष इति** ॥ ननु अत्यन्तासदेव आरोप्यत इति वादेऽपि अतिव्याप्तिस्तदवस्थैव । शुक्तिरजतादेरपि बाधकप्रमाविषयत्वात् । न च सत्त्वे सति इति विशेषणं दीयत इति वाच्यम् । तावतैव पूर्तेः प्रमाविषय इत्यस्य वैयर्थ्यप्रसङ्गादिति, नैषदोषः । अस्तीति प्रथमं यद्विधीयते तत् प्रमाविषय इति विवक्षितत्वात् । न च शुक्तिरजतज्ञानमस्तीति प्रमाविधेयत्वमस्तीति वाच्यम् । तत्वज्ञानस्यैव विधेयत्वात् । न चाभावेऽव्याप्तिः । अभावोऽस्तीति कदाचित् प्रतीतिसम्भवात् । अत एव नातीतानागतयोरव्याप्तिरिति दिक् ।

(पृ. १०) **पूर्वस्य तथात्वादिति** ॥ तदानीमारोपितस्यात्यन्तासत्त्वादित्यर्थः ॥ (पृ. ११) **स्वरूपेति** ॥ स्वरूपे स्वप्रतीतौ स्वप्रवृत्तौ च परानपेक्षमिति प्रत्येकं लक्षणमिति भावः ॥ (पृ. १४) **नापीति** ॥ न हीदं नास्तीति बाधकं, किं तु अत्रेदं नास्तीति सावधित्वनियमात् सावधित्वं वाच्यम् । तथा च अवधिरेव तत्वमित्यर्थः । यद्वा बाधविषयस्य तत्वतानिवृत्त्यर्थं तस्यापि बाधो वाच्यः । तथाचानवस्था स्यात् । न चैवं दृश्यत

स्वातन्त्र्यं विना न सम्भवतीति भगवानित्यनत स्वातन्त्र्योपपादक मित्याह (पु. १८) — **अत्रेति** ॥ (पु. ३०) **अन्यथा एवं भावप्रतिक्षेपोऽपीति** । घटोऽपि किं घटवति भूतले वर्तते? उत घटाभाववति? नाद्यः । आत्माश्रयप्रसङ्गात् । न द्वितीयः । विरोधादित्यादि वक्तुं शक्यत्वादिति भावः ।

ननु प्रात्त्वादिना विविधोऽभाव इति न युज्यते । प्रात्त्वादेः कालनिष्ठत्वादिति चेन्न । शाखायां चन्द्र इत्यादाविव परम्परासम्बन्धेन प्रात्त्वादिना अभावस्य विवक्षितत्वादित्याभिप्रेत्याह — (पु. ३१) **उपलक्षितोऽभाव** इति ॥ यद्वा कर्तृकरणयोरिति तृतीयाऽसम्भवात इत्थम्भूतलक्षणे तृतीयेत्याह — **उपलक्षित** इति ॥ **उत्तरेति** ॥ अत्र अभाव इत्येवोक्ते सदाभावेऽतिव्याप्तिरत उक्तं — **एकावधिरिति** ॥ तथापि ध्वंसेऽतिव्याप्तिरत उक्तं — **उत्तरेति** ॥ घटादावतिव्याप्तिवारणाय — **एकेति** ॥ लिङ्गदेहादावतिव्याप्तिवारणाय — **अभाव** इति ॥ लिङ्गदेहानुयोगिकान्योन्याभावेऽतिव्याप्तिवारणाय तद्व्यतिरिक्तत्वे सतीति विशेषणीयम् । यदा उदाहृतान्योन्याभावादौ अतिव्याप्तिपरिहाराय अभावशब्देन भावान्याभाव एव विवक्ष्यते, तदा स्वरूपकथनार्थमेकपदम् ॥ (पु. ३५) **यथासम्भवमिति** ॥ यदि संसर्गस्य उत्तरोत्पत्तिः तदा प्रागभावे, यदि तु न वृत्तः न भविष्यति तदा सदातनाभावे । यदि तु नष्टस्तदा ध्वंसे । यदि तु नष्टः पुनर्भविष्यति तदा प्रतियोगिभेदेन ध्वंसप्रागभावयोरित्यर्थः ॥ (पु. ३६) **द्विविध** इति ॥ अभावो द्विविधः । संसर्गाभावोऽन्योन्याभावश्चेति । तत्राद्यः उपादानोपादेययोः सम्बन्धाभावेन । प्रागभावत्वादिना त्रिविध इति ब्रुवत इत्यर्थः । आद्यपक्षे दूषणान्तरमाह — **कार्यकारणयोरिति** ॥ तथा च संसर्गावच्छिन्नप्रतियोगिकत्वं नास्तीति भावः ।

अत्रेदं चिन्त्यते । भावाभावौ द्विधेति न युज्यते । उभयात्मकानां घटादीनां विद्यमानत्वात । किं च भावाभावलक्षणं घटादावतिव्याप्तम् । एकैकस्याप्यभावे उभयात्मकत्वभङ्गप्रसङ्गात। किं च अभावत्रैविध्यं अनुपपन्नं, प्रागभाव-

प्रध्वंसात्मकस्यापि सत्त्वात्। प्रागभावादिलक्षणमपि न शोभते। पूर्वोत्तरावधि-प्रागभावादौ अव्याप्तेः। न च घटादौ प्रागभावादिव्यवहार उपचारत इति वाच्यम्। अन्यस्य प्रागभावादेर्वक्तव्यत्वापातात् इत्यविचारितसुन्दरमेतदिति चेत् —

अत्र ब्रूमः। भावाभावौ द्विधेति न युज्यत इति यदुक्तं तत्तुच्छम्। अभावप्रतियोगिकप्रागभावाभावध्वंसयोर्भावत्वनियमेन भावाभावात्मकस्याभावात्। अन्यथा अभावाभावातिरिक्तभावाभावेन भावपदार्थो दत्तजलाञ्जलिकः स्यात्। भावलक्षणाभावे भावत्वाङ्गीकारविरोधः। अभावलक्षणाभावे ध्वंसत्वाद्यभ्युपगमविरोधः। ततश्चोभयात्मकत्वानङ्गीकारेण अन्यतरस्यातिव्याप्तिरिति भावेन किंचेति यदुक्तं तदसारम्। अश्वस्य सैन्धवत्वनिर्वाहाय लवणशब्दवाच्यत्वं वाच्यम्। अश्वत्वनिर्वाहाय अश्वशब्दवाच्यत्वम्। ततश्च व्यवस्था न स्यात् इत्यादि वक्तुं शक्यत्वेन व्यवहारमात्रोच्छेदप्रसङ्गात्। तथापि यदि शिष्यभावेन कथमिति ब्रूषे, तदा अवधानेन शृणु।

ध्वंसादयो द्विविधाः। भावा अभावाश्चेति। तत्राभावप्रतियोगिको भावः। भावप्रतियोगिकोऽभावः। ततश्च विभागोऽनुपपन्न इति शङ्कानवकाश इति। अभावपदार्थस्यैव त्रैविध्यमुच्यते न त्वभावशब्दवाच्यस्य इति। किं चाभावत्रैविध्यमिति यदुक्तं तदलीकमेव। प्रागभावादीति यदुक्तं तदप्यतिमन्दम्। विभागानुसारेण भावप्रतियोगिकस्यैव लक्ष्यत्वात्। न चेति यदुक्तं तदप्यसत्। मुख्यत एव व्यवहार इत्यङ्गीकारात्।

एवमसारं वदता अविचारितसुन्दरमेतदिति लज्जां विहाय कथमुक्तमिति चिन्त्यम्। न च ध्वंसस्य प्रागभावत्वविरोध इति वाच्यम्। प्रतियोगिभेदेन पितृपुत्रत्ववत् अविरोधादिति सन्तोष्टव्यम् इति दिक्।

ननु पूर्वं द्वैविध्यस्यानुक्तत्वात् अपिशब्दो न युज्यत इत्यतो विभागापेक्षया समुच्चयो युज्यत इत्याह — (पृ ३७) **न केवलमिति** ॥ (पृ. ४०) **व्यष्टिसमष्टिभेदेनेति** ॥ मुक्तामुक्तभेदेनेत्यर्थ इति केचित्। व्यष्टयो ब्रह्मादि-

अयं भावः । विमुक्तमिदं आदौ कथिते दुःखसंस्थविभागमुक्त्वा अनन्तरं विमुक्तियोग्याः पूर्वोक्तदेवादिभेदेन पञ्चधेति वक्तव्यमिति गौरवं स्यात्। दुःखसंस्थविभागानन्तरं कथिते तु एवं विमुक्तियोग्याश्चेति अतिदेशसौकर्य-मस्तीति क्रमोल्लङ्घनमिति ।

(पृ. ४३) **गन्धर्वादीनां केषांचिद्देवेष्वेवान्तर्भावादिति**॥ एतेष्वेव यथायथं गन्धर्वादीनामन्तर्भावादित्यर्थः। क्वचित्तु देवेष्वन्तर्भावादिति पाठः। तत्र देवशब्देन तद्भृत्यगन्धर्वाद्या ग्राह्या इत्यर्थः ।

ननु आसुरगन्धर्वाणामप्यन्तर्भावे पुनर्विरोधस्तदवस्थ इत्याह - **केषांचि-दविवक्षितत्वादिति** ॥ केचित्तु देवशब्देन कर्मजा आजानजाश्चोच्यन्ते । ततश्च तुम्बुरुप्रमुखानां शतगन्धर्वाणां उर्वश्याद्यप्सरसां च आजानजदेवेष्व-न्तर्भावः । तुम्बुर्वाद्युत्तमानां अष्टानां कर्मदेवेषु । अन्ये देवगन्धर्वा अविवक्षिता इति न विरोधः ।

नहीदं विभागवाक्यं न्यूनाधिक्यान्यतमान्तर्भावाभावज्ञापनार्थं, येन विरोधः स्यात् । किं नाम मुक्ता देवऋष्यादिभेदेन तारतम्योपेता इत्येवम्परमिति भाव इत्याहुः ।

ननु चतुर्विधास्तमोयोग्या द्विविधा इति वक्तुं न शक्यते । प्राप्ततम-स्कानां तमोयोग्यत्वाभावादित्यत आह (पृ. ४५) **योग्यताया इति**॥ (पृ-४६) **सत्कार्यवादेन इति** ॥ सदेव कार्यं कुलालादिव्यापारानन्तरं अभिव्यज्यत इति वदन्त इत्यर्थः ॥ **लेशत इति** ॥ नित्या वेदाः समस्तशः पुराणानि तदर्थानीत्यादिकमित्यर्थः । वेदा इत्युपलक्षणमिति केचित् । अत्र वेदानां कूटस्थतया आद्यन्तशून्यत्वाभ्युपगमे ग्रन्थान्तरविरोधमाशंक्य उपलक्षणपदेन जहत्स्वार्थलक्षणोच्यत इत्याहुः ।

अपरे तु ईश्वरप्रतिपत्तिप्रयुक्तक्रमवद्वेदोऽत्र विवक्षित इति न विरोध इत्याहुः ॥

(पु. ४९) **विरोधोऽपि परिहृत इति** ॥ नित्यत्वानित्यत्वयोरेकस्मिन् विरोधः परिहृत इत्यर्थः । तद्व................वक्तुं शङ्कामुत्थापयति — **नन्विति** ॥ दूषयति — (पु. ५०) **मैवमिति** ॥ (पु. ५१) **कस्मिन्नाय त्तमिति** । कस्मिन्विषये, कस्मिन् पुरुषे, अधीनतया वर्तत इत्यर्थः ।

ननु समासः संक्षेप इत्युक्तं, तर्हि किमग्राह्यं? इत्यतोऽभिप्रायमाह — (पु. ५२) **इदमुक्तं भवतीति** ॥ **ज्ञानाभावस्तु सर्वस्येति** । ननु लक्ष्म्याः ज्ञानस्य प्रागभाव उच्यते वा? ध्वंसो वा? सदाभावो वा? नाद्यद्वितीयौ । अनित्यत्वप्रसङ्गात् । नान्त्यः । असत्त्वप्रङ्गादिति चेत् अज्ञाते सगुणविषयकः सदाभावो विवक्षित इति सर्वं मङ्गलम् ॥

(पु ५३) **अथ** समापितप्रकरणः श्रीमज्जयमुनिः स्वेष्टदेवताप्रीतिं **प्रार्थयति पद्येति** ॥

**नरसिंहार्यवर्याणामनन्ताख्येन सूनुना ।**
**श्रीपतेः प्रीतये भूयात्कृतेयं 'तत्वदीपिका'** ॥

इति श्रीमतां लोकविख्यातानां श्रीमुष्ण **आर्याचार्या**ऽपरनामधेयानां **नरसिंहाचार्य**वर्याणामात्मजेन **अनन्ताचार्य**वर्येण विरचिता **तत्वदीपिका**ख्या व्याख्या समाप्ता ॥

श्रीरस्तु ॥

॥ श्री कृष्णार्पणमस्तु ॥




(विष्णुः)
भावः
अभावः
चेतनम्
अचेतनम्
प्रागभावः
प्रध्वंसाभावः
सदाऽभावः
दुःखस्पृष्टम्
तदस्पृष्टम् (रमा)
नित्यम् (वेदाः)
अनित्यम्
नित्यानित्यम् (पुराणानि-कालः-प्रकृतिः)
विमुक्ताः
दुःखसंस्थाः
असंसृष्टम्
महदादिः २४ तत्वानि
संसृष्टम्
अण्डं तद्गतं समस्तं च
मुक्तियोग्याः
तदयोग्याः
ऋषयः
पितरः
पाः
नराः
तमोयोग्याः
सृतिसंस्थिताः (मध्यमाः)
(नित्यसंसारिणः)
प्राप्तान्धतमसः
सृतिसंस्थिताः
दैत्याः
रक्षांसि
पिशाचकाः
मर्त्याधमाः